


॥ श्रीः ॥

# वृत्तरत्नाकरः ।

## श्रीनारायणभट्टविरचितया व्याख्यया सहितः ।

प्रथमोऽध्यायः ।

नत्वा गणेशं वाग्देवीं पिङ्गलं मातरं गुरुम् ।
अन्यानपि च भाष्यादिकर्तॄंश्छन्दोविशारदान् ॥

श्रीभट्टरामेश्वरसूरिसूनुर्नारायणः स्वामनिरुध्य बुद्धिम् ।
संक्षेपवृत्त्या विवृतिं सुवृत्तरत्नाकरे व्यक्ततया तनोति ॥

विशिष्टशिष्टाचारमूलभूत 'स्वस्ति न इन्द्रो वृद्धश्रवाः' इत्यादिवैदिकलिङ्गकल्पितश्रुतिप्रमाणकविशिष्टेष्टदेवतानमस्कारजनितनिर्विघ्नतादिः स्वनामकीर्तनपूर्वकं स्वग्रन्थस्य ग्रन्थान्तरैरधिगतार्थतां च सूचयन्सप्रयोजनं कर्तव्यं सामान्यज्ञानपूर्वकविशेषजिज्ञासुप्रवृत्तिसिद्ध्यर्थं सामान्यतः प्रतिजानीते सुखेत्यादिश्लोकत्रयेण—

सुखसंतानसिद्ध्यर्थं नत्वा ब्रह्माच्युतार्चितम् ।
गौरीविनायकोपेतं शंकरं लोकशंकरम् ॥ १ ॥
वेदार्थशैवशास्त्रज्ञः पव्येको[1]ऽभूद्द्विजोत्तमः ।
तस्य पुत्रोऽस्ति केदारः शिवपादार्चने रतः ॥ २ ॥
तेनेदं क्रियते छन्दो लक्ष्यलक्षणसंयुतम् ।
वृत्तरत्नाकरं नाम बालानां सुखसिद्धये ॥ ३ ॥[2]

ब्रह्माच्युताभ्यां विधातृविष्णुभ्यामर्चितं पूजितं गौर्या पार्वत्या विनायकेन गणाधिपेन चोपेतं लोकानां चतुर्दशभुवनानां भूरादीनां सप्तानां वा शंकरं सुखकर्तारमेवंविधं शंकरं महादेवं सुखसंतानसिद्ध्यर्थे प्रणामजनिताविघ्नतादिसंभूताव्याकुलीभावबुद्धिवैभवादिजनि-

---

१. 'पव्येकः' इति पाठः. २. एतदनन्तरम् 'इति त्रिभिर्विशेषकम्', 'इति कलापकम्' इति पाठौ.

तत्सुखपरम्पराप्राप्त्यर्थं तेन केदारेणेदं छन्दः क्रियत इति तृतीयश्लोकेनान्वयः । वेदानामृगादीनामर्थं शैवशास्त्राणि च रुद्रयामलादीनि जानातीत्येवंविधः पव्येकसंज्ञो द्विजोत्तमो ब्राह्मणोत्तमोऽभूत् । तस्य पुत्रः केदारनामा शिवचरणारविन्दपूजनतत्परोऽस्ति । लक्ष्येणोदाहरणेन मात्रावर्णान्यतरनियतात्मकेन छन्दसा, लक्षणेन च तन्नियमकथनात्मकेन छन्दसा तदभिन्नेन युक्तम् । लक्ष्यमेव लक्षणमिति विग्रहः । वृत्तरत्नानामाकरः खनिर्यत्र तत् । यद्वाकरः समूहो यत्र । 'आकरो निवहोत्पत्तिस्थानश्रेष्ठेषु कथ्यते' इति विश्वप्रकाशोक्तेः । एतयैवान्वर्थसंज्ञया नाम प्रसिद्धं छन्दस्तत्प्रतिपादकत्वाल्लक्षितं तच्छास्त्रं बालानां छन्दःशास्त्राज्ञानानां सुखेनाल्पोपायेन सिद्धये छन्दोज्ञानार्थं क्रियत इत्यर्थः । सुखपदस्य प्रथमप्रयोगादेतच्छ्रवणेन श्रोतॄणां सुखातिशयः सूचितः । यद्वा बालप्रतिपत्तेः प्रयोजनत्वेऽपि स्वप्रयोजनत्वाभावादेतद्ग्रन्थजनितबालव्युत्पत्तिजनितोपकारादृष्टेन जनिष्यमाणस्वर्गादिसुखपरम्परैव स्वेष्टस्वग्रन्थप्रयोजनत्वेनानेन निर्दिश्यते । ब्रह्मविष्णुगौरीविनायकम् । तेन मङ्गलान्तरं तदनु स्मृतिसरूपं सूचितम् । शंकरमित्यत्र शंशब्दस्याव्ययत्वाद्विभक्त्यन्तत्वाभावात् 'सुपो धातुप्रातिपदिकयोः' इति न भवति । द्विजोत्तमग्रहणेन च ब्राह्मणकर्तृत्वादेतस्य ग्रन्थस्य श्रवणे दोषाभावः सूचितः । लक्ष्येत्यादीनां लक्ष्येभ्यः काव्यादिभ्यः केवललक्षणेभ्यश्च सूत्रादिभ्यो भिन्नलक्ष्यलक्षणेभ्यश्च वृत्तादिभ्योऽतिशय इति सूचितः ॥

एवं सामान्यतो ग्रन्थकरणं प्रतिज्ञाय पूर्वाचार्योक्तिमूलकतया स्वकल्पितताशङ्काजनितश्रोत्रनादरं निराकर्तुं प्रतिपाद्यमर्थं विशेषतः प्रतिजानीते—

पिङ्गलादिभिराचार्यैर्यदुक्तं लौकिकं द्विधा ।
मात्रावर्णविभेदेन छन्दस्तदिह कथ्यते ॥ ४ ॥

पिङ्गलेन सूत्रकर्त्रा, आदिपदाद्भाष्यकारादिभिश्च आचार्यैरवधेयवचनैर्यल्लौकिकं छन्दो मात्रावर्णविभेदेनेदं मात्राच्छन्द आर्यादीदं वर्णच्छन्दः समान्यादीति भेदेन द्विधा द्विप्रकारमुक्तं तच्छन्द इह ग्रन्थे कथ्यत इत्यर्थः । लौकिकशब्देन वेदवेदाङ्गानधिकारिणामत्रैवर्णिकानामप्यस्मिन्ग्रन्थेऽधिकार इति दर्शयति । मात्रावर्णग्रहणेन मात्राच्छन्दो गणच्छन्द इति कैश्चिदुक्तो द्वेधा विभागः पराकृतः, तादृशविभागे च गणच्छन्दसामपि संग्रहादिति भावः । अन्ये तु गणमात्राक्षरच्छ-

न्दस्त्वेन त्रैविध्यमाहुः । यदुक्तम्—'आदौ तावद्गणच्छन्दो मात्राच्छन्दस्ततः परम् । तृतीयमक्षरच्छन्दश्छन्दस्त्रेधा तु लौकिकम् ॥' इति । गणच्छन्द आर्यादि, मात्राच्छन्दो वैतालीयादि, अक्षरच्छन्दः समान्यादीति ॥

अन्यकर्तृकसंभावितच्छन्दोऽन्तःप्रक्षेपनिक्षेपनिराकरणाय ग्रन्थं परिमाणतः परिच्छिनत्ति—

षडध्यायनिबद्धस्य छन्दसोऽस्य[1] परिस्फुटम् ।
प्रमाणमिह विज्ञेयं षट्त्रिंशदधिकं शतम् ॥ ५ ॥

परि समन्तात्साकल्येन स्फुटं प्रकटं यथा स्यात्तथा षड्भिरध्यायैर्निबद्धस्य घटितस्यास्य छन्दसश्छन्दोग्रन्थस्य वृत्तरत्नाकराख्यस्य षट्त्रिंशदधिकं षट्त्रिंशत्संख्याधिकं द्वात्रिंशदक्षराणामनुष्टुप्छन्दसां श्लोकानां १३६ परिमाणं ज्ञेयम् । अनुष्टुप्श्लोकपरिमाणमेवात्र गृह्यते, ग्रन्थगणनायां लोके तस्यैव प्रसिद्धत्वात् । एतेनान्यतरग्रन्थपाठे प्रयासाभावाद्विस्तीर्णभाष्यस्ववृत्त्यादिग्रन्थप्रयासनैरपेक्ष्येणैव प्रसिद्धसकलच्छन्दोज्ञाननिरतैर्व्युत्पित्सुभिरयमेव ग्रन्थोऽभ्यसनीय इत्युक्तं भवति ॥

इदानीं सकलवाग्व्यापित्वेन मादीन्गणान्स्तुवंल्लक्षणकथनार्थमुद्दिशति—

म्यरस्तजभ्नगैर्लान्तैरेभिर्दशभिरक्षरैः ।
समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना ॥ ६ ॥

मगण-यगण-रगण-सगण-तगण-जगण-भगण-नगण-गुरुभिर्लान्तैर्लघुयुक्तैरेभिर्दशभिर्गणाष्टकगुरुलघुरूपैरक्षरैः समस्तं वाङ्मयं वाग्जालं व्याप्तम् । अस्तीति शेषः । अत्रोपमा—विष्णुना त्रैलोक्यं यथा व्याप्तं तद्वत् । अत्र स्वरोच्चारणं सौकर्यार्थम् । एवमुत्तरत्रापि ॥

वक्ष्यमाणाक्षरप्रस्तारक्रमोपक्रमनिर्देशकसूत्रानुरोधेनायं क्रम उक्तः— 'धी श्री स्त्री म्', 'वरा सा य्', 'का गुहा र्', 'वसुधा स्', 'सा ते क त्', 'कदा स ज्', 'किं वद भ्', 'न हस न्', 'गृ ल्' इति क्रमेण गणांल्लक्षयति—

---

१. 'अपि' इति पाठः.

सर्वगुर्मो मुखान्तलौ यरावन्तगलौ सतौ ।
ग्मध्याद्यौ ज्भौ त्रिलो नोऽष्टौ भवन्त्यत्र गणास्त्रिकाः ॥ ७ ॥

अत्र छन्दःशास्त्रेऽष्टौ त्रिकाख्यक्षरा गणा भवन्ति । चतुरक्षरा गणा मा भूवन्निति त्रिका इत्युक्तम् । परिमाणेन तानाह—सर्वेति । सर्वे गवो गुरवो यस्मिन्नसौ सर्वगुः । 'नामैकदेशो नामग्रहणम्' इति न्यायेन गुशब्दो गुरुवाची । एवं लशब्दो लघुवाची । एवं सर्वत्र । मो मगणः । मुख आदावन्तर्मध्ये लो लघुर्ययोस्तौ य-रौ यगण-रगणौ । अन्ते गलौ गुरुलघू ययोस्तौ क्रमेण स-तौ सगण-तगणौ । ग् गुरुर्मध्य आद्यश्च ययोस्तौ ज्-भौ जगण-भगणौ । त्रिलस्त्रिलघुर्नो नगणः । एतेषां प्रस्तारो यथा—

| मः | यः | रः | सः | तः | जः | भः | नः |
|---|---|---|---|---|---|---|---|
| ऽऽऽ | ।ऽऽ | ऽ।ऽ | ।।ऽ | ऽऽ। | ।ऽ। | ऽ।। | ।।। |

एतेषां क्रमनियमश्च प्रस्तारे प्रकटीभविष्यति । अन्यत्रापि मादीनां स्वरूपमुक्तम्—'मस्त्रिगुरुस्त्रिलघुश्च नकारो भादिगुरुः पुनरादिलघुर्यः । जो गुरुमध्यगतो रलमध्यः सोऽन्तगुरुः कथितोऽन्तलघुस्तः ॥' इति । अन्यैस्तु देवताफलस्वरूपाण्येषामुक्तानि—'मो भूमिस्त्रिगुरुः श्रियं दिशति यो वृद्धिं जलं चादिलो रोऽग्निर्मध्यलघुर्विनाशमनिलो देशाटनं सोऽन्त्यगः । तो व्योमान्तलघुर्धनापहरणं जोऽर्को रुजं मध्यगो भश्चन्द्रो यश उज्ज्वलं मुखगुरुर्नो नाक आयुस्त्रिलः ॥' इति । इदं च फलं काव्यनाटकस्य तत्कर्तुः पठितुर्वा यथायोग्यं व्यस्तं समुचितं वा ज्ञेयम् । यत्र नायकादिभिः प्राचीनो देवतादिः स्वकल्पितो वात्र कर्तुः श्रोतॄणां चेत्यादि । क्वचित्तु देवतामात्रमवादि—'पृथ्वी जलशिखिवायु गगनं सूर्यश्च चन्द्रमा नाकः । प्रस्तारक्रमवशतो देवा ज्ञेया यथासंख्यम् ॥' इति । अथ यदि दैवाद्दुष्टफलो गणः काव्यादौ कृतः तद्रक्षणार्थं द्वितीयो गणः शोध्यः । तत्र मगण-नगणौ मित्रसंज्ञौ, भगण-यगणौ भृत्यौ, ज-रावुदासीनौ, त-सावरी नीचौ च । तदुक्तम्—म-नौ मित्रे भ-यौ भृत्यावुदासीनौ ज-रौ स्मृतौ । त-सावरी नीचसंज्ञौ ज्ञेयावेतौ मनीषिभिः ॥' इति । तथा च यदि मित्रगणान्मित्रगणस्तदा समृद्ध्यादि फलम्' मित्रगणाद्भृत्यगणो जयादिशुभम्, मित्रादुदासीने शून्यकम्, मित्राच्छत्रौ बन्धुपीडा, भृत्यान्मित्रे तु सर्वकार्यसिद्धिः, भृत्याद्भृत्ये सर्वो लाभः, भृत्यादुदासीने धननाशः, भृत्याद्वैरिणि शोकः, उदासीनान्मित्रे किंचिदेव कार्यसिद्धिः, उदासीनाद्भृत्ये सर्वे वशाः, उदासीनादुदासीने न शुभं न चाशुभम्, उदासी-

नाच्छत्रौ स्वजनवैरम्, [ शत्रोर्मित्रे भ्रमः, ] शत्रोर्भृत्ये गृहिणीनाशः, शत्रोरुदासीने स्वकुलक्षयः, शत्रोः शत्रौ काव्यनायकनाशो भवति। इति गणयुगफलम्। तदुक्तम्—'मित्रान्मित्रादयः स्युर्यदि धनमुदयं शून्यकं बन्धुपीडा भृत्यान्मित्रादयश्चेद्धृतिमधिकगुणं हानिशोकौ च कुर्युः। औदास्यार्थाच्च मित्रादय इह कुसखा धैर्यमीषत्स्ववैरं शत्रोर्मित्रादयश्चेद्भ्रममथ गृहिणीनाशमाधिं विनाशम् ॥' इति। तथा 'मित्रान्मित्रं विधत्ते प्रचुरधनमथो मित्रतो भृत्यसंज्ञः स्थैर्यं मित्रादुदासो न किमपि च फलं मित्रतः शत्रुसंज्ञः। बन्धोः पीडामथो स्याद्यदि खलु नियतं भृत्यतो मित्रसंज्ञः सर्वं कार्यं च भृत्याद्भृतगण इह चेदायतिः सर्वलोके ॥ भृत्याच्चेत्स्यादुदासो धनविगममथो भृत्यतः शत्रुसंज्ञः शोकं कुर्यादुदासाद्यदि भवति तदा मित्रसंज्ञोऽल्पकार्यम्। तस्माद्भृत्यः प्रभुत्वं तत इह सततं स्यादुदासोऽपि नाशं तस्माच्छत्रुः स्ववैरं विविधगुणहरं सर्वसत्कार्यनाशम् ॥ शत्रोर्मित्रं च शून्यं यदि भवति ततो भृत्यसंज्ञो गृहिण्या नाशं तस्मादुदासो धनहरमधिकं दुःखदारिद्र्यशोकम्। शत्रोः शत्रुर्भवेच्चेद्द्विगुणससहितो नायकस्यैव नाशं देशोद्वासं विधत्ते कथयति च फलं पिङ्गलो नागराजः ॥' इति। अत एव किरात-माघ-नैषधीयेषु दुष्टफलादप्युदासीनाज्जगणादुदासीनस्य तगणस्य सत्त्वान्न मन्दं न चाशुभमिति दोषाभावः। अथ गणशुद्धिप्रसङ्गाद्वर्णशुद्धिरुच्यते। तच्छुद्धौ हि नायकादीनां सुखं भवति। तदुक्तम्—'अक्षरे परिशुद्धे तु नायको भूतिमृच्छति' इति। तत्र ङ-झ-ञ-ट-ठ-ढ-ण-प-फ-ब-भ-म-र-ल-व-ष-ह-लान्संयुक्ताक्षराणि च विहाय शेषाक्षराणि शुभफलानीति संक्षेपः। तदुक्तं भामहेन—'अवर्णात्संपत्तिर्भवति मुदिवर्णाद्धनशतान्युवर्णादख्यातिः सरभसमृवर्णाद्विरहितात्। तथा ह्येचः सौख्यं ङ-ञ-ण-रहितादक्षरगणात्पदादाविन्यासात् भ-र-व-ह-ल-पूर्वैर्विरहितात् ॥', 'कः खो गो घश्च लक्ष्मीं वितरति न यशो ङस्तथा चः सुखं छः प्रीतिं जो मित्रलाभं भयमरणकरौ झ-ञौ ट-ठौ खेददुःखे। डः शोभां ढो विशोभां भ्रमणमथ च णस्तः सुखं थश्च युद्धं दो धः सौख्यं मुदं नः सुखभयमरणक्लेशदुःखं पवर्गः ॥ यो लक्ष्मीं रश्च दाहं व्यसनमथ ल-वौ शः सुखं षश्च खेदं सः सौख्यं हश्च खेदं विलयमपि च लः क्षः समृद्धिं करोति। संयुक्तं चेह न स्यात्सुखमरणपटुर्वर्णविन्यासयोगः पद्यादौ गद्यवक्त्रे वचसि च सकले प्राकृतादौ समोऽयम् ॥' इति। तथा दुःखदारिद्र्यवाचकाः शब्दाश्चादौ न प्रयो-

ज्याः । अयं च प्रयोगनिषेधः काव्यादावुक्तः श्लोके चादौ ज्ञेयः । देवतादिवाचकशब्दे तु गणविचारेऽक्षरविचारे दोषाभावः । तदुक्तं भामहेनैव—'देवतावाचकाः शब्दा ये च भद्रादिवाचकाः । ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा ॥' इति । तथा च माघ-किरात-योर्जगणसंयोगयोः प्रयोगेऽपि श्रीशब्दप्रयोगाद्दोषाभाव इत्यलं भूयसा प्रसक्तेन । प्रकृतमनुसरामः ॥

इदानीं मात्राच्छन्दःसूपयोगिनो गणानाह—

ज्ञेयाः सर्वान्तमध्यादिगुरवोऽत्र चतुष्कलाः ।
गणाश्चतुर्लघूपेताः पञ्चार्यादिषु संस्थिताः ॥ ८ ॥

अत्रार्यादिषु छन्दःसु स्थिताश्चतुष्कलाश्चतुर्मात्राः पञ्चगणा ज्ञेयाः । प्राकट्याय स्वरूपतस्तानाह—सर्वेति । सर्वत्रान्तर्मध्य आदौ च गुरु-र्येषां ते तथा । कथंभूताः । चतुर्लघुना गणेनोपेता युक्ताः । तत्र चतुर्मात्रिकत्वात्सर्वगुरुर्द्विगुरुर्लभ्यते । यथा—

| सर्वगुरुः | अन्त्यगुरुः | मध्यगुरुः | आदिगुरुः | चतुर्लघुः |
|---|---|---|---|---|
| ऽऽ | ॥ऽ | ।ऽ। | ऽ॥ | ॥॥ |

अयं गणक्रम आर्यानष्टोद्दिष्टयोरुपयोगीति तत्रैव वक्ष्यति । पञ्चकला-दयस्तु प्राकृतप्रक्रमे वक्ष्यन्तेऽसंस्कृतेऽनुपयोगात् ॥

गणान्संलक्षयित्वा गुरुं लक्षयति—

सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः[1] ।
वा पादान्ते[2] त्वसौ ग्वक्रो ज्ञेयोऽन्यो मात्रिको[3] लृजुः ॥ ९ ॥

असौ वर्णो ग् गुरुर्ज्ञेयः । कोऽसावित्यपेक्षायामाह—सानुस्वार इति । अनुस्वारेण युक्तः अं-कं-इत्यादिः, विसर्गान्तः, अः-कः-इत्यादिः । दीर्घः आकार इत्यादिः । इदं प्लुतस्याप्युपलक्षणम् । युक्तपरो युक्तः संयुक्तः परो यस्य सः । संयोगे परभूते यः पूर्वः सोऽपि गुरुरित्यर्थः । यथा विष्णुरित्यादौ विशब्दादिः । पादान्ते श्लोकचरणान्तेऽनुव-र्तमानो लघुर्गुरुर्वा भवति । लघ्वपेक्षिते लघु कार्यम्, गुरावपेक्षिते गुरु कार्यं करोतीत्यर्थः । अयं च व्यवस्थितविकल्पः । तेन 'अथ वास-वस्य वचनेन' इत्यादावुद्धतादिपदान्तस्य लघुतैव । 'तस्याः खुरन्या-सपवित्रपांसुम्' इत्यादौ च गुरुतैव । युक्तपरश्चेति व्यञ्जनोपध्मानीय-

---

१. 'सः' इति पाठः. २. 'पादान्तः' इति पाठः. ३. 'मातृको' इति पाठः.

जिह्वामूलीयपराणामुपलक्षणम्। तथा च—'तनुवाग्विभवोऽपि सन्। मन्दः कवियशःप्रार्थी' इत्येवमादिषु सकारस्य जिह्वामूलीयोपध्मानीयपक्षे च दकार-शकारयोर्गुरुत्वं सिद्धं भवति। इतरथा नकारस्य पादान्तत्वात्सकारस्य न प्राप्नोति, जिह्वामूलीयोपध्मानीययोश्च संयोगत्वाभावाद्दकार-शकारयोर्न प्राप्नोति। तदुक्तम्—'दीर्घं संयोगपरं तथा प्लुतव्यञ्जनान्तमूष्मान्तम्। सानुस्वारं च गुरुं क्वचिदवसानेऽपि लघ्वन्त्यम्॥' इति। व्यञ्जनपरस्य गुरुत्वाल्लघ्वन्तपादेषु समान्यादिषु व्यञ्जनान्तः पादो न कार्यः। ननु संयोगे गुरु दीर्घं चेति वदता पाणिन्याचार्येण पादान्तस्थादीनां गुरुसंज्ञायामनुक्तत्वात्तद्विरोध इति चेत्, मैवम्। 'कुण्डा' 'हुण्डा' इत्यादिषु 'गुरोश्च हलः' इत्यकारप्रत्ययस्य, 'ईहांचक्रे,' 'ऊहांचक्रे,' इत्यादिषु च 'इजादेश्च गुरुमतोऽनृच्छः' इत्यांम्प्रत्ययस्य सिद्ध्यर्थं स्वशास्त्रे संयोगदीर्घयोर्गुरुत्वं पाणिनिः प्रत्यज्ञासीत्। अन्यैस्तु स्वशास्त्रे प्रयोजनाभावान्नोच इति न किंचिदेतत्। वृत्तिकारस्तु 'गन्ते' इति सूत्रे वाशब्दाश्रवणात्सर्वत्र पादान्तस्थस्य लोगुर्भवतीति व्याचख्यौ, तदयुक्तम्। गुरुलघुभ्यां लघुभिरेव च समाप्तयोः समानीगीत्यार्ययोर्व्यभिचारात्। अथ तत्र लघुसमाप्तिविधायकशास्त्रेण विशेषात्मकेन सामान्यस्यास्य बाध इति मतम्, तदपि न सिद्ध्यै। न हि लघुना समाप्तिर्विधीयते, न तु समाप्तिस्थस्य लघुत्वं येन बाधः स्यात्। 'गन्ते' इति सूत्रं त्वन्ते पदान्ते स्थितो लघुः क्वचिद्गुरुरिति क्काचित्कत्वाभिप्रायं व्याख्येयम्। तेन न तद्विरोध इत्यलं प्रपञ्चेन। स च प्रस्तारे वक्रः। नागराक्षरेऽकारप्रश्लेष (ऽ)चिह्नवज्ज्ञेयो लेख्यः। अन्यः पूर्वोक्तेभ्यः सानुस्वारादिभ्योऽन्यः ल् लघुः। कोऽसावन्यः। मात्रिको मात्रारूपः। एतेन गुरोर्द्विमात्रत्वमुक्तं भवति। स प्रस्तारे कर्तव्ये ऋजू रेखाकारः (।) कार्यः॥

संयोगपरस्य क्वचिदपवादमाह—

पादादाविह वर्णस्य संयोगः क्रमसंज्ञकः।<br>
पुरःस्थितेन तेन स्याल्लघुतापि क्वचिद्गुरोः॥ १०॥

इह च्छन्दःशास्त्रे पादादौ चरणादौ वर्णान्तरेण संयोगः क्रमसंज्ञकः। पूर्वाचार्यैरुक्त इति शेषः। तेन पादादिसंयोगेन पुरःस्थितेन क्वचिदपेक्षितविषये संयोगपरत्वाद्गुरोरपि लघुता स्यात्। 'वा पादान्ते' इत्यत्र पादान्ते लघोर्गुरुत्वम्। इह तु गुरोर्लघुत्वमिति न पौनरुक्त्यमिति भावो वक्ष्यते॥

गुरोर्लघुतायामुदाहरणं सांप्रतमाह—

तरुणं सर्षपशाकं नवोदनं[2] पिच्छिलानि[3] च दधीनि ।
अल्पव्ययेन सुन्दरि ग्राम्यजनो मिष्टमश्नाति ॥ ११ ॥

अस्य पूर्वश्लोकार्धस्यात्र ग्राम्यनागरिकवरागमे ग्राम्यवरे साभिलाषां चतुरवधूं निन्दागर्भस्तुत्या निवारयन्ती सख्याह—हे सुन्दरि, ग्राम्यजनो ग्रामीणो जनोऽल्पव्ययेन मिष्टं रसवदशनमश्नाति भुङ्क्ते किं तत् । तरुणं कोमलं सर्षपानां शाकम्, नवानां तण्डुलानामोदनं चापर्युषितौदनम्, पिच्छिलानि बद्धानि दधीनि । अल्पद्रव्यो मिष्टाभासभोजी ग्राम्यजनोऽचतुरोऽयम् । हे सुन्दरि, अतोऽमुं परित्यज्य नागरिके साभिलाषा भवेत्यत्र ध्वन्यम् । अत्र सुन्दरीत्यत्र संयोगपरत्वाद्गुरुत्वे सति तृतीये पादे त्रयोदश मात्रा मा भूदिति लघुत्वं प्रतिज्ञायत । तथा च द्वादशमात्रतैवेति भावः । क्वचिदिति व्यवस्थितविकल्पार्थम् । तेन सुन्दरीत्यत्र लघुतैव । 'गुणिनामपि निजरूपप्रतिपत्तिः परत एव संभवति । स्वमहिमदर्शनमक्ष्णोर्मुकुरतले जायते यस्मात् ॥' 'दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य' इत्यादौ गुरुतैव । आर्यामुदाहरतार्यासु पादव्यवस्थाभावं वदन्तो वृत्तिकृतः पराकृताः । अत एव 'त्रिभिस्त्रिभिर्गणैः पादावार्यादेर्विषमौ स्मृतौ' इति, 'यस्याः पादे प्रथमे' इत्यादि चाभियुक्तैरुक्तं पथ्याभिप्रायं वा, तत्र पादव्यवस्थाया वक्ष्यमाणत्वात् । ननु 'वा पादान्ते' इत्यत्र वर्णमात्रस्य वा पादान्तस्थस्य गुरुता विकल्प्यते, गुरोरेव वा नित्यप्राप्ता सा विकल्प्यते, लघोरेव वा । नाद्यः, पादान्तवर्णमात्रस्य तेनैव गुरुताविकल्पपक्षे लघुत्वस्यापि सिद्धत्वात्पादादावित्यस्य वैयर्थ्यप्रसङ्गात्, लघ्वंशेऽप्राप्तविकल्पः, गुर्वंशे प्राप्तविकल्प इति विरुद्धार्थद्वयकृतवाक्यभेदप्रसङ्गाच्च । न द्वितीयः, तेनैव पाक्षिकलघुताया सिद्धौ पुनर्विधानवैयर्थ्यात्, तरुणमित्युदाहरण एव द्वितीयचतुर्थपादान्तयोर्लघ्वोर्गुरुत्वाभावे छन्दोभङ्गप्रसङ्गाच्च । न तृतीयः, लघोस्तत्राप्रस्तुतत्वात्, असंयोगपरस्यापादान्तगुरोरक्रमपरत्वात्पाक्षिकलघुत्वाभावप्रसङ्गाच्चेति चेत्, अत्र पादान्तवर्णमात्रमुद्दिश्य विकल्पितं गुरुत्वं तेन विधीयत इति विधेयोद्देश्ययोरेकैकावच्छेदार्थद्वयस्यार्थसिद्धत्वाद्वाक्यभेदाभावः पौरुषेयत्वाद्वा स न दोषः । पादादाविति च तस्यैव विषयं प्रदर्शयद्विवरणं तरुणमित्यादिषु गुरो-

१. अस्य पूर्वम् 'इदमस्योदाहरणम्' इति क्वचित्. २. 'नवौदनम्' इति पाठः. ३. 'पिच्छलानि' इति पाठः.

लघुतायां तृतीयपाद उदाहरणम्, लघोर्गुरुतायां च द्वितीयचतुर्थपाद-योरुदाहरणमित्यापातत उत्तरं भवति। वस्तुतस्त्वप्रस्तुतस्याप्यर्थतो बुद्धिस्थस्य लघोरेव गुरुता तेन विकल्प्यते । पादान्तगुरोस्तु लघुता संयोगपरस्यैवेत्यनेनैवोच्यते । अक्रमपरस्य तु पादान्तगुरोर्लघुता नेष्टैव । अत एव 'गन्ते' इति सूत्रे 'गृल्' इति पूर्वसूत्राद्ग्रहणमनुवर्त्य गृशब्दोपलक्षितस्य ह्रस्वाक्षरस्य पादान्ते वर्तमानस्य गुरुसंज्ञा निर्दिश्यते इति वृत्तिकारेणोक्तम् । इदं च गुरोर्लघुत्वं संयोगनिमित्तकगुरोरेव, न दीर्घादेः। अत्र सोदाहरणो मामकः संग्रहश्लोकः—'युक्तपरस्त्वनिमित्तकप्रान्तगुरोरेव वेष्यते लघुता । पादान्तस्थस्य लघोरिह गुरुता वेद्यस्य जानीहि ॥' इत्यलं प्रपञ्चेन । इदं चोपलक्षणं प्रशब्दे ह्रशब्दे च परतोऽपादान्तस्थस्यापि लघुतायाः कविप्रयोगे दर्शनात् । तथा च कुमारसंभवे—'गृहीतप्रत्युद्गमनीयवस्त्रा' इति प्रशब्दे परतस्तस्य लघुता दृष्टा। 'प्राप्तनाभिह्रदमज्जनमाशु' इति । अन्यत्रापि 'तव ह्रियापह्रियो मम ह्रीरभूत्' इति ह्रशब्दे परतो लघुता दृष्टा। अन्ये तु संयोगमात्रे परभूते लघुत्वमतीव प्रयत्नतयेत्याहुः । अत एव सरस्वतीकण्ठाभरण उक्तम्—'यदा तीव्रप्रयत्नेन संयोगादेरगौरवम् । न च्छन्दोभङ्गमित्याहुस्तदा दोषाय सूरयः॥' इति। तथा च कविप्रयोगाः । रामायणे—'कृतार्थाश्च कृतार्थानां मित्राणां न भवन्ति ये । तान्मृतानपि क्रव्यादः कृतघ्नान्नोपभुञ्जते ॥' इति। 'एवं तदार्या नृपवीरसिंह सीता वचः प्राह विषादयुक्तम्। एतच्च श्रुत्वा गदितो मया त्वं सीतोपलम्भे प्रकुरुष्व यत्नम् ॥' इति च। 'तव ह्रियापह्रियो मम ह्रीरभूच्छशिगृहे विहृता न धृता ततः। बहुलभ्रामरमेचकतामसं मम प्रिये क समेष्यति नो पुनः ॥' इति च। अन्यत्र—'धनप्रदानेन श्रुतेन कर्णः' इत्यादि । प्राकृतेऽपि—'जह ण्हाउं ओइण्णे अब्भन्तमुल्हसिअमंसुअद्धन्तम्। तह अण्हाआसि तुमं सच्छे गोलाणईतूहे॥ [यथा स्नातुमवतीर्णे उद्भ्रान्तमुल्लसितमंशुकार्धान्तम् । तथा च स्नातासि त्वं स्वच्छे गोदानदीतोये॥]' इति । अत्र द्वितीयैकादशत्रयोविंशतिवर्णानां संयोगपरत्वाद्गुरुत्वेऽपि ण्हल्हादिसंयोगस्यातीव तीव्रप्रयत्नोच्चारणेन पूर्वस्य लघुतायां न छन्दोभङ्गो भवति । इदं च महाकविप्रयोगदर्शने भवति, न तु स्वेच्छया । अत एवाहुः—'क्वचिदपि संयुक्तपरो वर्णो लघुरत्र दर्शनेन यथा । परं ह्रसति चित्तधैर्यं दारकटाक्षेषु निर्वृत्तम् ॥' इति। तीव्रप्रयत्ने तु गुरुतैव । 'अथ प्रजानामधिपः प्रभाते' इत्यादौ । तथा इं-हिं-उं-हुं-काराणामेकारौकारयोश्च केवलयोः सव्यञ्जनयोर्वा प्राकृता-

दिभाषासु विभाषागुरुता भवति । तदुक्तम्—'इ-हि-कारौ बिन्दुयुतौ ए-ओ शुद्धौ च वर्णमिलितौ च । रहयोर्व्यञ्जनयोगे सविभाषं सर्वमेव लघु ॥' इति । अत्र इ-हि-कारावित्युपलक्षणम् । इं-हिं-ए-ओ एतेषूदाहरणम्—'माणिणि माणेहि काइं फलं एओ जे चरणमिलु कन्त । सहजे भुजङ्गमु जइ णमइ तह किं करिअ मणिमन्त ॥ [मानिनि मानैः किं फलमेष यच्चरणमिलितः कान्तः । सहजेन भुजङ्गमो यदि नमति तत्र किं क्रियते मणिमन्त्रैः ॥]' अत्र इं-हिं-ए-ओ इत्येतेषां गुरुतायां दोहाच्छन्दसोऽधिकमात्रताभ्यपद्येत । इह व्यञ्जनसंयोगे तूदाहृतम् । तथा प्राकृतादिषु दीर्घस्यापि त्वरितपाठे लघुता । तथा द्वयोस्त्रयाणां वा वर्णानां त्वरितपाठ एकवर्णता भवति । तदुक्तम्—'दीर्घाक्षरमपि जिह्वा ह्रस्वं चेत्पठति तदपि भवति लघु । द्वौ वा त्रीनथ वर्णानेकं जानीहि शीघ्रपठनाच्च ॥' इति । अत्रोदाहरणमूह्यम् । अयं प्राकृतविचारः पञ्चमाध्यायान्तवक्ष्यमाणप्राकृतच्छन्दःसूपयोगाय कृत इत्यलं बहुना ॥

परिभाषान्तराण्याह—

अब्धिभूतरसादीनां ज्ञेयाः[1] संज्ञास्तु लोकतः ।
ज्ञेयः पादश्चतुर्थांशो[2] यतिर्विच्छेदसंज्ञितः[3] ॥ १२ ॥

लोकतो लोकव्यवहारादब्ध्यादीनां संज्ञाः संज्ञीभूताः । चतुरादिसंख्या इति यावत् । ज्ञेया यतिनियमेषु । तद्यथा—अब्धयश्चत्वारः, भूतानि पञ्च, रसाः षट्, आदिपदादश्वा मुनयश्च सप्त, वसवो नागाश्चाष्टौ, ग्रहा नव, दिशो दश, रुद्रा एकादश, आदित्या द्वादश, इत्येवमादि ज्ञेयम् । अब्ध्यादिशब्दाः स्वपर्यायाणां स्वार्थसंख्यासमानसंख्यार्थानां चाप्युपलक्षकाः । तेन समुद्रवेदादयोऽपि लोकतो ज्ञेयाः । तथा छन्दःशास्त्रत्वाच्छन्दश्चतुर्थांशश्चतुर्थो भागः पादो ज्ञेयः । पादादिव्यवहारेष्वंशः समचतुर्थोऽत्र न ग्राह्यः । किंतु यावान्यत्रोक्तः । तथा च समानां विषमाणां चोद्धतादीनां पादाः संगृहीता भवन्ति । पादशब्दः स्वपर्यायाणामङ्घ्रिचरणादीनामुपलक्षकः । तथा यतिर्यतिशब्दो विच्छेदे विरामे संज्ञितः परिभाषितः संज्ञाकृतो ज्ञेयः । 'संज्ञिता' इति पाठे यतिशब्दसामानाधिकरण्यात्स्त्रीलिङ्गता ज्ञेयेति विपरिणततानुषङ्गः । इयं च यतिः श्रुतिसौकर्यार्थं नियतस्थानेषु कार्या । यतिनियमस्थानानि च वृत्तकारैः संगृहीतानि—'यतिः सर्वत्र पादान्ते

---

१. 'ज्ञेया संज्ञात्र' इति पाठः. २. 'चतुर्थोऽशो' इति पाठः. ३. 'संज्ञिका' इति पाठः.

श्लोकार्धे तु विशेषतः । समुद्रादिपदान्ते च व्यक्ताव्यक्तविभक्तिके ॥ क्वचित्तु पदमध्येऽपि समुद्रादौ यतिर्भवेत् । यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ ॥ पूर्वान्तवत्स्वरसंधौ क्वचिदेव परादिवत् । एद्भ्यो यतिचिन्तायां यणादेशः परादिवत् ॥ नित्यं प्राक्पदसंवद्धाश्चादयः प्राक्पदान्तवत् । परेण नित्यसंबद्धाः प्रादयश्च परादिवत् ॥' इति । तेषामर्थ उदाहरणेन स्पष्टीक्रियते । 'यतिः सर्वत्र पादान्ते' इत्यस्योदाहरणम्—'अत्र मे सखि शिखण्डमण्डने पुण्डरीककमनीयलोचने । श्यामतामरसदामकोमले रामनामनि मनो मनोरमे ॥' इत्यादि । प्रत्युदाहरणं तु—'नमस्तस्मै महादेवाय शशाङ्कार्धधारिणे' इत्यादि । 'श्लोकार्धे तु विशेषतः' इत्यस्योदाहरणं पूर्वोदाहरणे 'दधीनि । अल्पव्ययेन' इत्यत्र संधिर्न भवति स्पष्टविभक्तिकता च भवतीति विशेषः । संधौ प्रत्युदाहरणम्—'श्यामा कामाकुला रामावामा भोगाय नाप्यते । नैकजन्मसुपुण्यानां निचयो न चितो यदि ॥' अत्र पूर्वरूपकरणम् । स्पष्टविभक्तिकतायां प्रत्युदाहरणम्—'सुरासुरशिरोरत्नस्फुरत्किरणमञ्जरी । पिञ्जरीकृतपादाब्जद्वन्द्वं वन्दे महेश्वरम् ॥' अत्र समासकरणम् । समुद्रादीत्यत्रोदाहरणम्—'तस्मिन्नद्रौ कतिचिदवलाविप्रयुक्तः स कामी' इति । अत्र मन्दाक्रान्तायां चतुर्षु स्पष्टविभक्तिकता । ततः षड्व्यक्तविभक्तिकता । पादान्तः इत्यस्यापि विशेषणम् । व्यक्ताव्यक्तविभक्तिक इति । तत्रोभयोदाहरणम्—'स्यन्दने गरुडकेतुलाञ्छने कुण्डिनेशतनयाधिरोपिता । केनचिन्नवतमालकोमलश्यामलेन पुरुषेण नीयते ॥' क्वचिदिति समुद्रादौ या यतिः सा पदमध्ये क्वचिद्भवति । यदि पदस्य यत्यपेक्षया पूर्वपरभागावेकवर्णौ न भवत इत्यर्थः । अत्रोदाहरणम्—'पर्याप्तं तप्तचामीकरकटकतटे श्लिष्टशीतेतरांशौ' इति । समुद्रादावित्युक्ते पादान्तयतिः पदमध्ये न भवति । प्रत्युदाहरणम्—'प्रणमत भवबन्धक्लेशनाशाय नारायणचरणसरोजद्वन्द्वमानन्दहेतुम्' । पूर्वोत्तरभागयोरेकाक्षरत्वे तु यतिर्दोषाय । सा च धातुनामप्रत्ययाव्ययभागभेदेन चतुर्धा । तत्र क्रमेणोदाहरणानि—'एतासां राजति सुमनसां दाम कण्ठावलम्बि', 'स्वीकुर्वन्ति हि सुधियः प्रकुर्वते च', 'दुःसोढो दाशरथिमहिमा राक्षसानां बभूव', 'सुरासुरशिरोनिघृष्टचरणारविन्दः शिवः', 'सबलयति सुरवधूकल्पासु रामासु को न', 'भुवि सुरगुरुदेशीयाः कियन्तो न सन्ति', 'कलिवशविवशः संप्रत्ययं जीवलोकः', 'रामेशं वा प्रतिदिनमुदिताब्दो रमे शंभुनामा' । एवमन्यान्यपि संकीर्णान्युदाहरणानि ज्ञेयानि । पूर्वान्तवत्स्वरसंधावित्यस्यार्थः ।

योऽयं पूर्वपरयोरेकादेशः स्वरः सवर्णदीर्घादिः, स प्रायः पूर्वान्तवत्क्वचिदेव परादिवच्च द्रष्टव्य इति । अत एवान्तादिवच्चेति पाणिनिः सस्मार । पूर्वान्तवद्भावे यथा—'कस्ते दारिद्र्यदावानल वदतु यशो वावदूकोऽपि दाने', 'स्यादस्थानोपगतयमुनासंगमेवाभिरामा' । परादिवद्भावे यथा—'अन्तेवासिदयालुरुज्झितनयेनासादितो जिष्णुना' । अत्र स्वरस्य परादिवद्भावे व्यञ्जनमपि परादिवद्भवति । तदुक्तत्वाद्यदि पूर्वापरभागौ न स्यातामेकवर्णकाविति पूर्वान्तवत्स्वरसंधावित्यादेरपि शेषस्तेन 'अस्या वक्त्रं समरजयि पूर्णेन्दुशोभं विभाति' इत्यादौ यतिर्दूष्या । असौ तत्रापि पूर्वभागस्यैवैकवर्णतायां दोषः । न तूत्तरस्य तदर्थमेव स्वरसंधावनेनापवादकरणाद्यणादेशः । पूर्वादिवदित्यत्रोदाहरणम्—'सप्ताकूपारप्रथितपृथुयशस्यर्थिसार्थैं कृतार्थैं' । व्यञ्जनस्यापि परादिवद्भावो दृश्यते । यथा—'इत्यौत्सुक्यादपरिगणयन्गुह्यकस्तं ययाचे' इति । तेभ्यः पूर्वा यतिर्न कार्येत्यर्थः । यथा—'बाले भूपतिमौलिलालितपदद्वन्द्वश्च वृद्धोऽपि च' । आदिपदात् 'रक्षोभिः सुरमनुजैर्दितेः सुतैर्वा' । प्रत्युदाहरणं तु—'नमः शिवाय कृष्णाय च दानवविनाशिने ।' नित्यं प्राक्पदसंबद्धा इति किम् । 'तथाद्रियन्ते न बुधाः सुधामपि' । चादय इति किम् । 'संपत्तिः सैव रमणीसखैर्या भुज्यते भुवि' । अत्र समासान्तटच्प्रत्ययान्तसखिशब्दस्य नित्यं प्राक्पदसंबन्धत्वेऽपि यतिर्न दुष्यति । परेण नित्यसंबद्धा इति । पदादिति तेभ्यः परा यतिर्न भवतीत्यर्थः । 'प्रस्मृतः किमथवा पठितो नु' । आदिपदात् 'निजगृहे जयिनं तिसृणां पुराम्' । परेण नित्यसंबद्धा इति किम् । कर्मप्रवचनीयेभ्यः परा यतिर्भवत्विति । यथा—'श्रेयांसि बहुविघ्नानि भवन्ति महतामपि' । प्रादय इति किम् 'राक्षसाधिपबलं प्रणाशयांचक्रतू रघुवरौ वशौ रणे' । अयं त्वनेकाक्षराणां चादीनां प्रादीनां चादिवद्भावः पादान्तयताविष्यते । एकाक्षराणां तु पादान्तयतौ पादमध्ये समुद्रादियतौ च । तदुक्तं कविकल्पलतायाम्—'एकस्वरोपसर्गेण विच्छेदश्श्रुतिसौख्यकृत्' इति । पादान्ते यतौ प्रत्युदाहरणं तत्रैवोक्तम् । यथा—'पिनाकपाणिं प्रणमामि स्मरशासनम्' इति । पादमध्ये यतौ प्रत्युदाहरणम्—'विष्णु रुद्रं च खलु भजतां नैव संसारबन्धः' । अनेकाक्षराणां तु पादमध्ये चामीकरादिष्विव पूर्वापरभागयोरेकवर्णत्वाभावाद्यतिरिष्टैव । तत्र चादीनां यथा—'प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम्' इत्यादि । प्रादीनां यथा—'दूरारूढप्रमोदं हसितमिव परिस्पृष्टमाशासखीभिः' । अत्र नित्यं प्राक्पदसंबद्धा इत्यत्र 'स्वादु स्वच्छं स-

लिलमपि च प्रीतये कस्य न स्यात्' । नित्यं प्राक्पदसंबद्धा इति किम् । 'मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः' इति । 'परेण नित्यसंबद्धा' इत्यत्र च 'दुःखं मे प्रक्षिपति हृदये दुःसहस्तद्वियोगः' इत्यादि वृत्तिकारैः समुद्रादियतिरुदाहृता । अन्ते चायं तु पदान्तयतावन्तादिवद्भाव इष्यते, न तु पादमध्ययताविल्यादि स्वयमेवोक्तम् । तद्विचारणीयम् । यथा--'अनुक्तयतिकेऽप्येवं कार्यो श्रुतिसुखा यतिः' । तदुक्तं कविकल्पलतायाम्—'एवं यथायथोद्वेगः सुधियां नोपजायते । तथा तथा मधुरतानिमित्तं यतिरिष्यते ॥' इति । शुक्लाम्बरादयस्तु पदान्त एव यतिमाहुः । भरतादयस्तु यतिमेव नेच्छन्ति । अत एव कविप्रयोगाः । तत्र भर्तृहरेः—'लभेत सिकतासु तैलमपि यत्नतः पीडयन्पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः । कदाचिदपि पर्यटञ्शशविषाणमासादयेन्न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥' इति । जयदेवस्यापि—'भावं श्रृङ्गारसारस्वतमयजयदेवस्य विष्वग्वचांसि' इति । तदुभयं बहुविरोधाच्चिन्त्यम् । इयं च यतिर्वृत्तस्वरूपाद्भिन्नापि गुणालंकाराद्यपेक्षयान्तरङ्गाङ्गत्वात्सूत्रकारादिभिर्लक्षणमध्ये निबद्धा, न तु वृत्तस्वरूपतया । मात्रागुरुलघुनियमनं हि वृत्तलक्षणं विरामात्मकत्वं च यतेः, अत एव वामनेन काव्यालंकारसूत्रेषु 'न वृत्तदोषात्पृथग्यतिदोषो वृत्तस्य यत्यात्मकत्वात्' इत्याशङ्क्य 'न लक्षणस्य पृथक्त्वात्' इति परिहृतमित्यलम् ॥

परिभाषान्तरमाह—

युक्समं विषमं चायुक्स्थानं सद्भिर्निगद्यते ।

समं द्वितीयचतुर्थादि स्थानं युगिति सद्भिर्निगद्यते । विषमं चैकतृतीयादि स्थानं सद्भिरयुङ् निगद्यते । चकारात्समस्य युग्मानोजसंज्ञे विषमस्यायुग्मौजसंज्ञे इत्यादि ज्ञेयम् । पदैः पादाख्यैर्घटितं पद्यम् । तद्विविधम्—जातिर्वृत्तं चेति । जातिर्नियतमात्रिका, वृत्तं नियतगुरुलघुविन्यासम् । तत्र जातिरार्यादि । वृत्तमुक्तादि समार्धसमविषमात्मकम् । तदुक्तम्—'पद्यं चतुष्पदं तच्च वृत्तं जातिरिति द्विधा । वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेत् ॥' इति ॥

एतत्सर्वं मनसि निधाय वृत्तस्य भेदानाह—

सममर्धसमं वृत्तं विषमं च तथापरम् ॥ १३ ॥

समाख्यमर्धसमाख्यं विषमाख्यं चेति त्रिधा वृत्तमित्यर्थः ॥

त्रिविधस्यापि वृत्तस्यान्वर्थसंज्ञामाश्रित्य क्रमेण स्वरूपमाह श्लोकत्रयेण—

अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः ।
तच्छन्दःशास्त्रतत्त्वज्ञाः समं वृत्तं प्रचक्षते ॥ १४ ॥
प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत् ।
द्वितीयस्तुर्यवद्वृत्तं तदर्धसममुच्यते ॥ १५ ॥
यस्य पादचतुष्कोऽपि लक्ष्म भिन्नं परस्परम् ।
तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः ॥ १६ ॥

यस्याङ्घ्रयः पादाश्चत्वारोऽपि तुल्येन लक्षणेन लक्षिता युक्ताः, तच्छन्दःशास्त्रविशारदाश्छन्दःशास्त्रतत्त्वज्ञाः समं वृत्तं वदन्ति । द्वितीयचरणस्तुर्यवच्चतुर्थवदर्धसमं यस्य तदर्धसममित्यन्वर्थता । यस्य पादचतुष्टये परस्परं लक्ष्म लक्षणं भिद्यते तद्विषममाहुः, विगतं समं यस्मादिति व्युत्पत्तेः । तत्र समं श्र्यादि, अर्धसमं द्रुतमध्यादि, विषमं पदचतुरूर्ध्वादि ॥

तत्र समवृत्तभेदानाह—

आरभ्यैकाक्षरात्पादादेकैकाक्षरवर्धितैः ।
पृथक्छन्दो भवेत्पादैर्यावत्षड्विंशतिं गतम् ॥ १७ ॥

एकाक्षरात्पादादारभ्यैकेनाक्षरेण कविना वर्धितैः पादैः कृत्वा पृथग्भिन्नं छन्द उक्तादि भवेत् । वृद्ध्यवधिमाह—यावदिति । यावत्षड्विंशतिं षड्विंशतिसंख्याकं पादं प्रति गतं गमनं भवति । षड्विंशत्यक्षरपादपर्यन्तं वृद्धिर्भवतीत्यर्थः ॥

अधिकाक्षरपादस्य छन्दसः संज्ञामाह—

तदूर्ध्वं चण्डवृष्ट्यादिदण्डकाः परिकीर्तिताः ।

षड्विंशत्यक्षराच्छन्दस ऊर्ध्वं सप्तविंशत्याद्यक्षरपादं छन्दश्चण्डवृष्ट्यादिदण्डसंज्ञं भवति । सप्तविंशत्यक्षरादेकैकेन रगयादिना वृद्धिः, नत्वेकैकाक्षरेण । आदिपदादर्णवादि ॥

इह शास्त्रे विशेषलक्षणेनालक्षितस्य छन्दसः कविभिश्च ग्रथ्यमानस्य सामान्यसंज्ञामाह—

---

१. 'समवृत्तम्' इति पाठः.

शेषं गाथास्त्रिभिः षड्भिश्चरणैश्चोपलक्षिताः ॥ १८ ॥

शेषं विशेषनिरूपितादन्यत् । तदेवाह—त्रिभिरिति । क्वचित्त्रिभिः, क्वचित्षड्भिः, चकाराद्दशादिभिर्विलक्षणगुरुलघुक्रमवद्भिर्न्यूनाधिकाक्षरैश्चरणैर्युक्तास्ता गाथा ज्ञेया इत्यर्थः ॥

पूर्वोक्तानामेकाक्षरपादमारभ्य षड्विंशत्यक्षरपादावधिकानां छन्दसां सामान्यतो जातिसंज्ञा आह—

उक्तात्युक्ता तथा मध्या प्रतिष्ठान्या सुपूर्विका ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥ १९ ॥
त्रिष्टुप् च जगती चैव तथातिजगती मता ।
शक्करी सातिपूर्वा स्यादष्ट्यत्यष्टी ततः स्मृते[2] ॥ २० ॥
धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः ।
विकृतिः संकृतिश्चैव[3][4] तथातिकृतिरुत्कृतिः[5] ॥ २१ ॥

एकाक्षरपादोक्ता नामेयं च जातिसंज्ञा । अवान्तरसंज्ञास्तु वक्ष्यन्ते । एवमितरत्रापि द्व्यक्षरपादात्युक्ता । एवं शेषा अपि ज्ञेयाः । अन्या सुपूर्विका, अनन्तरोक्ता प्रतिष्ठैव, सुपूर्वा सती सुप्रतिष्ठा नामान्या जातिरित्यर्थः । सातिपूर्वेति । सा शक्कर्यतिपूर्वा । अतिशक्करीत्यर्थः । ननु सूत्रकारेण समच्छन्दसां गायत्र्यादीनामेवोक्तत्वादुक्ताद्यनुक्ते न तत्सूत्रत्वमिति चेन्न । 'द्विकौ ग्लौ' इत्यादिसूत्रोक्तैकाक्षरादिप्रस्तारस्य तत्संज्ञायां ज्ञापकत्वात्, कविभिः प्रायेणाप्रयुक्तत्वाच्च, तेषां लक्षणावसरेऽनुक्तिरिति भाव्यम् । ताः—१ उक्ता, २ अत्युक्ता, ३ मध्या, ४ प्रतिष्ठा, ५ सुप्रतिष्ठा, ६ गायत्री, ७ उष्णिक्, ८ अनुष्टुप्, ९ बृहती, १० पङ्क्तिः, ११ त्रिष्टुप्, १२ जगती, १३ अतिजगती, १४ शक्करी, १५ अतिशक्करी, १६ अष्टिः, १७ अत्यष्टिः, १८ धृतिः, १९ अतिधृतिः, २० कृतिः, २१ प्रकृतिः, २२ आकृतिः, २३ विकृतिः, २४ संकृतिः, २५ अतिकृतिः, २६ उत्कृतिः । अत्र प्रतिपादमेकैकाक्षरवृद्धौ सकले छन्दसि चतुरक्षरां वृद्धिर्भवति । तत्रोक्ता चतुरक्षरा । अत्युक्ताष्टाक्षरा एवमुत्तरत्रापि । उत्कृतिश्चतुरधिकशताक्षरा ॥

---

१. 'गाथा—लक्षिता' इति पाठः. २. स्मृता' इति पाठः. ३. 'संस्कृतिः' इति पाठः. ४. 'अपि' इति पाठः. ५. 'अभिकृतिः' इति पाठः.

उक्तानुवादपूर्वकं वक्तव्यमाह—

इत्युक्ताश्छन्दसां संज्ञाः क्रमतो[1] वच्मि सांप्रतम् ।
लक्षणं सर्ववृत्तानां मात्रावृत्तानुपूर्वकम् ॥ २२ ॥

इति श्रीकेदारभट्टविरचिते वृत्तरत्नाकरे संज्ञाभिधानो नाम प्रथमोऽध्यायः ॥

छन्दसामित्यमुना प्रकारेण जातिसंज्ञा उक्ताः । सांप्रतमिदानीं मात्रावृत्तानुपूर्वकं मात्रावृत्तमादितः कृत्वा सर्वेषां वृत्तादीनामुक्तानां क्रमशः क्रमेण लक्षणं वच्मि वदामीति योजना। प्रथमं मात्रावृत्तमुच्यते। तत उद्देशक्रमेण वर्णवृत्तमुच्यत इत्यर्थः ॥

इति श्रीमद्विद्वन्मुकुटमाणिक्यश्रीमद्भट्टरामेश्वरसूनुनारायणभट्टविरचितायां वृत्तरत्नाकरव्याख्यायां परिभाषाध्यायः प्रथमः ।

---

## द्वितीयोऽध्यायः ।

अथ मात्रावृत्तानि विवक्षुः प्रथममार्यां लक्षयति—लक्ष्मैतदिति द्वयेन ।

लक्ष्मैतत्[2]सप्त गणा गोपेता भवति नेह विषमे जः ।
षष्ठोऽयं[3]नलघू वा [4]प्रथमेऽर्धे नियतमार्यायाः ॥ १ ॥
षष्ठे द्वितीयलात्परके [5]न्ले मुखलाच्च सयतिपदनियमः ।
चरमेऽर्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥ २ ॥

आर्यायाः प्रथम एतन्नियतं सार्वत्रिकं लक्ष्म लक्षणं ज्ञेयम् । किं तत् । सप्तसंख्याका गोपेता गुरुणा युक्ता गणाश्चातुर्मात्रिकाः पूर्वोक्ता गुरूपेतत्वात्सार्धाः । यद्यपि 'स्वरा अर्धं चार्यार्धम्' इति सूत्रे अर्धं चेति ग्रहणात्सार्धाः सप्त गणा भवन्तीति सामान्यत उक्तम्, तथाप्यर्धगणस्थान एको गुरुरेवान्ते कार्यः, न तु लद्वयमिति सूचितम् । इहार्यार्धे विषमे प्रथमतृतीयादौ । स्थाने जो जगणो मध्यगुरुर्गणो न कार्यः । षष्ठस्त्वयं

---

१. 'क्रमशो' इति पाठः. २. एतत्पूर्वम् 'आर्यालक्षणमाह' इति क्वचित्. ३. 'नगणो' 'न लघुः' इति पाठौ. ४. 'प्रथमार्धे' इति पाठः. ५. 'अन्ते' इति पाठः. ६. 'षष्ठे' इति पाठः.

जगणः कार्यः । नलघू वा कार्यौ । नश्च लघुश्चेति नलघू वा । चतुर्लघुगणः कार्य इत्यर्थः । अन्ये तु स्वेच्छया ज्ञेयाः । षष्ठ इति द्वितीयलादित्यतः परम् । पूर्वमिति शेषः । षष्ठे न्ले षष्ठस्थाने चतुर्लघौ गणे कृते सति द्वितीयलात्तस्यैव षष्ठस्य चतुर्लघोर्गणस्य द्वितीयलघोः पूर्वं प्रथमलघ्वन्तं सयतिपदनियमो यतिसहितं पदं नियमेन समाप्यत इत्यर्थः । न्ले इति प्रथमाद्विवचनं वा । ततश्च षष्ठे स्थाने यदि न्ले नलघू स्याताम्, तदा द्वितीयलात्पूर्वं यतिरित्यर्थः । परके न्ले न-ले षष्ठापेक्षया परस्मिन्सप्तमके चतुर्लघौ कृते सति, मुखलात्सप्तमस्य प्रथमलघोः पूर्वं षष्ठगणान्ते सयति पदं नियम्यते । चरमे द्वितीये पुनरर्धे पञ्चमके न्ले चतुर्लघौ । तस्मान्मुखलघोः पूर्वम्, अर्थाच्चतुर्थान्ते, पदं समाप्यत इत्यनुषङ्गेण पूर्वपदाध्याहारेण योज्यम् । इहेति । इहार्याचरमार्धे षष्ठो गणो लो लघुरेव भवति । न चतुर्मात्रिका इति पूर्वार्धाद्विशेषः । उत्तरार्धे एतावन्मात्रं विशेषं वदतान्यापूर्वार्धलक्षणमेव भवतीति द्योतितम् । यतिनियमं छन्दोमाणिक्यकारोऽप्याह—'पूर्वार्धे षष्ठो जः खो वा खे चास्य लघुनि भवति यतिः । षष्ठः खपरोऽत्र यतिस्तुर्योऽप्यथ भवति चरमदले ॥' इति । अस्यार्थः—ख इति चतुर्लघोर्गणस्य संज्ञा । पूर्वार्धे षष्ठो गणो जगणः खो वा कार्यः । खे तु षष्ठे गणे, अस्य लघुनि तदीयप्रथमलघ्वन्ते यतिर्भवति । यदि षष्ठः खपरः खश्चतुर्लघुः परो यस्य स तथा । सप्तमश्चतुर्लघुः स्यादित्यर्थः । तदात्र षष्ठान्ते वा यतिश्चरमदले द्वितीयार्धे यदि तुर्यश्चतुर्थः खपरस्तत्रापि चतुर्थान्ते यतिरिति । यद्वा मूले पञ्चम्यौ ल्यब्लोपे । तेन द्वितीयलमादाय सयतिपदनियमः, सयतिकपदप्रारम्भनियम इत्यादिरर्थः । उभयथापि लक्षेऽविसंवाद एव । किं त्वेतस्मिन्व्याख्याने 'न्लौ चेत्पदं द्वितीयादि,' 'सप्तमः प्रथमादि,' इति सूत्रानुग्रहो पूर्वपदाध्याहारश्च न कर्तव्यो भवति । अत एव क्षेत्रराज आह—'षष्ठे द्वितीयमादाय लमेवारभ्यते पदम् । सप्तमे न्ले पुनर्मुख्यं पूर्वार्धेऽसौ यतिः स्मृता ॥ पदमारभ्यते नित्यं गृहीत्वा प्रथमं लघु । पञ्चमे न्ले बुधैरेवं चरमार्धे स्मृता यतिः ॥' इति । छन्दोमाणिक्योक्तसूत्रार्थकथनेनापि संगच्छते । अत्र यतिमात्रे नियते सति चामीकरादिवत्पूर्वापरभागयोरनेकाक्षरत्वे पदमध्ययतिर्मा भूदिति पदस्यापि नियम उक्तः । तत्र स्पष्टास्पष्टविभक्तिकत्वयोर्न विशेषः । अत्र प्रथमार्या षष्ठजगणपक्षे सामान्यलक्षणोदाहरणम् । षष्ठस्य चतुर्लघुत्वे पूर्वार्धद्विविधयतौ च द्वितीयार्यापूर्वार्धमुदाहरणम् । उत्तरार्धयतेस्तल्लक्षणस्य तदुत्तरार्धमिति विवेकः । अत्र विषमे

जगणनिषेधात्प्रत्येकं चत्वारो विकल्पाः । यथा—ऽऽ, ॥ऽ, ऽ॥, इति। समस्थाने तु जगणस्यानिषेधात्प्रत्येकं पञ्च । यथा—ऽऽ, ॥ऽ, ।ऽ।, ऽ॥, इति । ततश्च पूर्वार्धे प्रथमे भेदाः ४, द्वितीये ५, तृतीये ४, चतुर्थे ५, पञ्चमे ४, षष्ठे २ जन्लयोरेव विकल्पनात्, सप्तमे ४, अष्टमे गुरुरेकः । एतेषामन्योन्यगुणने द्वादश सहस्राणि, अष्टौ शतानि पूर्वार्धभेदाः । उत्तरार्धे तु षष्ठे लघुनियमनात्तदतिरिक्तं सर्वं पूर्ववदेव। तथा चान्योन्यगुणने षट्सहस्राणि चत्वारिंशतानि भेदा उत्तरार्धे । उभयविकल्पानां परस्परगुणनेऽष्टौ कोट्य एकोनविंशतिर्लक्षाणि विंशतिः सहस्राणि । इयमार्याणां भेदसंख्या । अङ्कतोऽपि ८१९२०००० । तदुक्तम्—'जगणविहीना विषमे चत्वारः, पञ्च युजि, जगणनलौ । षष्ठे द्वाविति च गणा तथान्तगः प्रथमदलसंख्या ॥ एवं परार्धसंख्या षष्ठे स्याल्लघुनि चैकस्मिन् । आर्या संख्योभयदलसंघाता विनिर्दिष्टा ॥' इति । अत्रैव प्रसङ्गादार्यासु नष्टोद्दिष्टे उच्येते—'लोके प्रसिद्धनामा विद्याविद्याविनोदविभवानाम् । जयतीह शुद्धचरितो रामेशाख्यो गुरुः काश्याम् ॥' यदा कश्चिज्जिज्ञासेतेयमार्या कतिथेति, तदास्या गणान्स्थापयेत् । गगणाधश्चतुःपञ्चादिकं संख्याविकल्पं यथासंख्यं स्थापयेत् । तत उपान्त्यमन्त्येन हत्वेष्टाद्विकल्पादधस्तनाञ्शेषान्विकल्पसंख्यापूरकान्विकल्पानपनीय शेषया संख्यया तदाद्यगुणकविकल्पाङ्कं हत्वेष्टविकल्पाधस्तनविकल्पान्राशेरपनीय शेषाङ्कं पूर्वपूर्वेण गुणयित्वेष्टविकल्पाधस्तनविकल्पाङ्कं पातयेत् । एवं यावदार्धं गुणं कुर्यात् । शेषसंख्ययार्यासंख्यां जानीयात् । अत्र सर्वान्तगुरुमध्यगुर्वादिगुरुसर्वलघुक्रमेणावस्थानेऽधस्तनत्वं ज्ञेयम् । अत्र न्यासः—

ऽऽ, ।ऽ।, ऽऽ, ऽऽ, ऽऽ, ।ऽ।, ॥ऽ, ऽ.

॥ऽ, ।ऽ।, ॥ऽ, ॥ऽ, ऽऽ, ।, ऽऽ, ऽ.

अत्रान्ते न्यस्तस्यार्धगणस्य विकल्पाभावादधस्तनैकाङ्कस्य द्वितीयेऽर्थे समाप्तेऽधस्तनैश्चतुर्भिर्गुणने जाताश्चत्वारः । सप्तमस्येष्टस्य सर्वगुरुत्वात्तस्याधस्तनान् ज(।ऽ।)गणव्यतिरिक्तानन्तगुर्वादिगुरुसर्वलघुस्त्रींश्चतुर्षु पातयेत् । शेष एकः । षष्ठस्य लघुमात्ररूपत्वाद्विकल्पाभावः । पञ्चमाधस्थचतुर्भिरेकगुणने कृत्वापि पूर्ववत्त्रयाणां त्यागे शेषस्यैकस्य चतुर्थाधस्थपञ्चमहतौ चतुर्षु शेषस्यैकस्य तृतीयाधस्थैश्चतुर्भिर्हतौ शेषयोर्द्वयोस्त्यागे शेषद्वयस्य द्वितीयस्थैः पञ्चभिर्हतौ द्वये त्यक्ते शेषा अष्टौ । तेषां प्रथमस्थैश्चतुर्भिर्हतौ जगणातिरिक्ते द्वये त्यक्ते त्रिंशत् । एवमुत्तरार्धे पूर्वार्धान्त्यगणार्धे त्वविकल्पं सप्तमस्थैश्चतुर्भिस्त्रि-

शतो हतौ द्वये पातिते शतमष्टादशाधिकं तस्य षष्ठस्थाभ्यां द्वाभ्यां हतौ एकस्य त्यागे पञ्चत्रिंशदधिकं शतद्वयं शिष्टम् । तस्य पञ्चमस्थैश्चतुर्भिर्हतौ त्रिषु पातितेषु शिष्टा सप्तत्रिंशदधिका नवशती । तस्यां चतुर्थस्थैः पञ्चभिर्हतायां चतुर्णां त्यागे एकाशीत्यधिकानि षट्चत्वारिंशच्छतानि । तेषु तृतीयस्थैश्चतुर्भिर्हतेषु त्रिषु पातितेषु अष्टादशसहस्राणि एकविंशत्यधिकानि सप्तशतानि च । तेषां द्वितीयस्थैः पञ्चभिर्हतौ द्वयोरपाये सहस्राणां त्रिनवतिस्त्र्यधिका षट्शती च । तस्यां प्रथमस्थैश्चतुर्भिर्हतायां त्रयत्यागे सिद्धोऽङ्को लक्षत्रयं चतुःसप्ततिः सहस्राणां नवाधिकानि चत्वारि शतानि च । अङ्कतोऽपि ३७४४०९ । एतावत्संख्येयं पूर्वोक्तार्या भवति । तदुक्तम्—गणानुद्दिष्टगाथायाः संस्थाप्य तदधो लिखेत् । चतुःपञ्चादिकां संख्यां स्थानस्थानोचितां ततः ॥ हत्वा हत्वाद्यमन्त्येन चोपरिस्थाद्गणादधः । पृथग्घातगणेभ्योऽथ गणसंख्यां विकल्पयेत् ॥ हताद्धार्योंचिता तावद्यावदाद्याङ्कसंभवः । तत्संख्यामुद्दिशेद्गाथामुद्दिष्टप्रत्यये बुधः' इति ॥

इत्याचार्योद्दिष्टविधिः ॥

अथ तत्र नष्टं यदा लक्षत्रयं चतुःसप्ततिसहस्राणि चत्वारि शतानि नव चेत्येतत्संख्यार्या कीदृगिति जिज्ञासा । तदा नष्टाङ्कां लिखित्वादिभूतगणविकल्पैर्भागं हरेत् । भागे हृते योऽङ्कः शिष्टस्तत्संमितं तद्गणविकल्पेषु गणं लिखेत् । भागहारे यल्लब्धं तत्सैकं कृत्वा पुनः पुनरुत्तरगणविकल्पैर्भागे हृते भाज्यशेषं संख्याङ्को गणस्तत्तद्गणविकल्पेषु पूर्वस्थापितगणानन्तरं स्थाप्यः । इत्येवं यावत्पूर्ति कार्यम् । यत्र तु गणविकल्प एवेष्यते तत्र तत्संख्य एव गणो ग्राह्यः । परं लब्धं सैकं न कार्यम् । शिष्टं पूर्ववत् । तद्यथा प्रथमगणस्य चतुर्विकल्पत्वाच्चतुर्भिः पूर्वोक्ते नष्टाङ्के हृते लब्धं त्रिनवतिसहस्राणि द्व्यधिकानि षट्शतानि च शेष एकाङ्क इति । प्रथमगणविकल्पेषु प्रथमः सर्वगुरुः स्थाप्यः । लब्धे सैके कृते द्वितीयगणस्य पञ्चविकल्पत्वात्तैर्भक्ते लब्धं सहस्राण्यष्टादशविंशत्यधिकसप्तशती च शेषास्त्रय इति । तद्विकल्पेषु तृतीयो मध्यगुरुः स्थाप्यः । लब्धे सैके तृतीयस्य चतुर्विकल्पत्वात्तैर्भक्ते लब्धमशीत्यधिकषट्चत्वारिंशच्छती शेष एक इति । तद्विकल्पेष्वाद्यः सर्वगुरुः कार्यः । लब्धे सैके चतुर्थः । पञ्चविकल्प इति, पञ्चभिर्भागे लब्धं नवशती षट्त्रिंशदधिका शेष एक इति । तद्विकल्पेष्वाद्यः सर्वगुरुः स्थाप्यः । लब्धे सैके पञ्चमस्य चत्वारो विकल्पा इति तैर्भक्ते लब्धं [चतुस्त्रिंशदधिकं शतद्वयं शेष एक इति, तद्विकल्पेषु सर्वगुरुः स्थाप्यः ।

लब्धे सैके षष्ठस्य जगणनलयोरेव विकल्पाद्वाभ्यां भक्ते लब्धं सप्ताधिकशतं शेष एक इति, तद्विकल्पयोराद्यो मध्यगुरुः स्थाप्यः । लब्धे सैके सप्तमस्य चत्वारो विकल्पा इति, तैर्भक्ते लब्धम्] एकोनत्रिंशत् शेषं द्वयमिति तद्विकल्पेषु द्वितीयोऽन्तगुरुः । ततः सर्वार्यानियतं गुरुं न्यसेत् । एवं पूर्वार्धं सिद्धम् । ततो लब्धे सैके आर्योत्तरार्धादिगणश्चतुर्विकल्प इति, चतुर्भक्ते लब्धं सप्त शेषं द्वयमिति । द्वितीयविकल्पोऽन्तगुरुः । लब्धे सैके, द्वितीयस्य पञ्च विकल्पा इति तैर्भक्ते लब्धमेकः शेषं त्रय इति तृतीयविकल्पो मध्यगुरुः । लब्धे सैके तृतीयश्चतुर्विकल्प इति चतुर्भिर्भक्ते लब्धं शून्यम् । शेषं द्वे इति द्वितीयविकल्पोऽन्तगुरुः । लब्धे शून्यं सैके चतुर्थः पञ्चविकल्प इति पञ्चभिर्भागे लब्धं शून्यं शेष एक इति प्रथमविकल्पः सर्वगुरुः । लब्धे सैके पञ्चमश्चतुर्विकल्प इति तैर्भक्ते लब्धं शून्यमवशेष एक इति प्रथमविकल्पः सर्वगुरुः । षष्ठो लघुरेक एव तस्य नियतत्वात् । लब्धे सैके सप्तमश्चतुर्विकल्प इति तैर्भक्तें लब्धं शून्यं शेष एक इति प्रथमः सर्वगुरुः । अन्त एको गुरुर्लेख्यो नियतत्वात् । एवं सत्येतादृशीयमिति पूर्वोक्तामेवार्यां वदेत् । तदुक्तम्—'नष्टाङ्के प्रथमं भक्ते गणाङ्कैश्चतुरादिकैः । शेषसंख्यो गणो ज्ञेयो लब्धं कुर्यात्सरूपकम् ॥ पुनर्भजेत्पुनर्लब्धं सरूपं शेषसंख्यया । गणान्दद्याद्गणे शेषे गाथाथ प्राग्गणक्रमः ॥' इति । एवमार्यादिषु गीत्यादिषु च ज्ञेयम् ॥

इत्यार्यानष्टविधिः ॥

अथ कश्चिदार्याविशेषानाह—

त्रिष्वंशकेषु पादो दलयोराद्येषु दृश्यते यस्याः ।
पथ्येति नाम तस्याः प्रकीर्तितं[1] नागराजेन ॥ ३ ॥

आद्येषु त्रिष्वंशकेषु चतुर्मात्रेषु त्रिषु गणेषु यस्या दलयोरर्धयोः पादो दृश्यते कविप्रयोगेषु तस्या आर्याया नागराजेन श्रेष्ठेन पिङ्गलेन पथ्येति नाम प्रकीर्तितम् । उक्तं 'त्रिषु गणेषु पादः पथ्याद्ये च' इति सूत्र इत्यर्थः । सर्वत्रात्र ऋषिनामनिर्देशः समूलताप्रदर्शनार्थः, न त्वन्यतमत्वप्रदर्शनार्थः, । इदमेवात्रोदाहरणम् । एवमुत्तरत्रापि ॥

संलङ्घ्य[2] गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः ।
यस्यास्तां पिङ्गलनागो विपुलामिति[3] समाख्याति ॥ ४ ॥

१. 'छन्दोविद्भिः समाख्यातम्' इति पाठः. २. 'उल्लङ्घ्य' इति पाठः. ३. 'विपुलेति च' इति पाठः.

यस्या आर्याया आद्यं गणत्रयं लङ्घयित्वा परतो यत्र क्वचिद्द्वयोः शकलयोरर्धयोर्व्यस्तयोः समस्तयोर्वा पादयोर्यतिः स्यात्, तामार्यामित्येवंप्रकारतया पिङ्गलनागो विपुलां समाख्याति कथयति । 'विपुलान्या' इति सूत्रम् । इतिशब्दं प्रकारवचनमङ्गीकृत्य व्याख्येयम् । तेन इतिनानुक्तत्वाद्विपुलामिति कर्मणि द्वितीया । न विरोधः प्रकारवाचिनेतिशब्देन चपलादीनामपि गणत्रयानन्तरं विरामत्वप्रकारे सति विपुलात्वमपि भवतीति संकीर्णभेदा अपि संगृहीताः । इयं च त्रिविधा पूर्वार्धं एव त्रिगणान्त इति विरामा मुखविपुला, उत्तरार्धे एतादृग्जघनविपुला, उभयोरर्धयोस्तादृगुभयविपुलेति । इयमेव महाविपुलेति । तत्र षष्ठे इत्यादिमूलस्थाद्या । द्वितीया ममैव । यथा—'करुणाविषये करुणां करुणावरुणालयाशु मयि धेहि । राघव करुणाशीलवतां विषमा मानसी वृत्तिः ॥' तृतीया मूलस्यैव ॥

उभयार्धयोर्जकारौ द्वितीयतुर्यौ गमध्यगौ यस्याः ।
चपलेति नाम तस्याः प्रकीर्तितं नागराजेन ॥ ५ ॥

यस्या द्वयोरर्धयोर्व्यस्तयोः समस्तयोर्वा द्वितीयचतुर्थौ गणौ पश्चात्पुरःस्थितगुरुमध्यगौ जगणौ स्याताम्, सार्या चपला । एतदुक्तं भवति—प्रथमो गणो द्विगुरुरन्यगुरुर्वा, तृतीयो द्विगुरुः, पञ्चमो द्विगुरुरादिगुरुर्वा, द्वितीयचतुर्थौ मध्यगुरू नियतमस्यामिति । अत्राद्यार्धे प्रथमे द्वौ विकल्पौ ( ऽऽ, ॥ऽ ), द्वितीय एकः ( ।ऽ। ), तृतीयेऽप्येकः ( ऽऽ ), चतुर्थेऽप्येकः ( ।ऽ। ), पञ्चमे द्वौ ( ऽ॥, ऽऽ ), षष्ठे द्वौ ( ऽ।, ॥॥ ), सप्तमे चत्वारः ( ॥॥, ऽऽ, ऽ॥, ॥ऽ ), अष्टमे गुरुरेव । अन्योन्यगुणने द्वात्रिंशत् । उत्तरार्धे षष्ठस्य लघुतामात्रत्वात्षोडश ॥

उभयार्धविकल्पानामन्योन्यगुणने द्वादशाधिकपञ्चशती विकल्पानाम्, अङ्कतोऽपि ५१२ । मुखविपुलादीनां सूत्रकारानुक्तत्वात्स्वयं स्फुटतयानुक्तावपि चपलाभेदौ सूत्रोक्तत्वाल्लक्षयति—

आद्यं दलं समस्तं भजेत लक्ष्म चपलागतं यस्याः ।
शेषे पूर्वजलक्ष्मा मुखचपला सोदिता मुनिना ॥ ६ ॥

यस्या आर्याया आद्यं प्रथमं दलमर्धं चपलान्वितं लक्ष्म लक्षणं भजेत । शेषे द्वितीयार्धे पूर्वजं सामान्यार्याभवं लक्ष्म यस्याः सा तथा सा मुनिना पिङ्गलेन मुखचपलोक्ता । अत्र चपलापूर्वार्धविकल्पानां

द्वात्रिंशतामार्यापरार्धविकल्पानां चतुःषष्टिशतरूपगुणानां परस्परताडनेन द्वौ लक्षौ चत्वारि सहस्राणि अष्टौ शतानि च विकल्पा भवन्ति । अङ्कतोऽपि २०४८०० ॥

प्राक्प्रतिपादितमर्धे प्रथमे प्रथमेतरे च चपलायाः ।
लक्ष्माश्रयेत सोक्ता विशुद्धधीभिर्जघनचपला ॥ ७ ॥

प्राक्प्रतिपादितं पूर्वोक्तं लक्ष्म सामान्यलक्षणं प्रथमार्धे भवति । प्रथमेतरे द्वितीयार्धे चपलालक्षणं भवति, सार्या विशुद्धा विवेकचतुरा धीर्बुद्धिर्येषां तैः पिङ्गलादिभिर्जघनचपलोक्ता । अत्रापि चपलायामिवोत्तरार्धविकल्पाः षोडश विकल्पाः । पूर्वार्धे त्वष्टशताधिकद्वादशसहस्रसंख्या आर्यापूर्वार्धविकल्पाः । अविकृता एव परस्परं गुणने द्वे लक्षे चत्वारः सहस्रा अष्टौ शतानि विकल्पाः । अङ्कतोऽपि २०४८००। उभयार्धयोश्चपलालक्षणयोगे महाचपला । सा च प्रथमैव मूले । अत्र चैका पथ्या विपुलाभेदत्रयं चेति चत्वारो भेदाः । पुनश्चैत एव प्रत्येकं चपलाभेदत्रयेण संपन्नाः सन्तो द्वादश एव मिलित्वा षोडशार्याभेदः स्थूलदृशां भवति । एषां भेदानां मध्येऽनुक्तोदाहरणानि स्वबुद्ध्या यथान्तरात्रावगन्तव्यानि । अस्माभिस्तूक्तप्रायत्वाद्ग्रन्थविस्तरभयाच्च नोक्तानि ॥

इति श्रीनारायणभट्टविरचितायां वृत्तरत्नाकरटीकायामार्याप्रकरणम् ॥

अथार्यालक्षणज्ञानपूर्वज्ञेयस्वरूपत्वात्कैश्चिदार्याभेदत्वाङ्गीकाराद्गीतिं लक्षयति—

आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः ।
दलयोः कृतयतिशोभां तां गीतिं गीतवान्भुजङ्गेशः ॥ ८ ॥

तदाशब्दोऽत्राध्याहार्यो यदिशब्दप्रयोगाय । तथा च यद्यार्याप्रथमार्धोक्तं लक्षणमुभयोरर्धयोः कथमपि विकल्पितषष्ठजगणचतुर्लघुगणान्यतमप्रकारश्च येनापि भवेत्, तदा कृतयतिशोभां कृता यत्या विच्छेदात्मिकया शोभा श्रुतिसौभाग्यं यस्यास्ताम् । एतेनार्योक्तो यस्तद्गणविशेषे सति विरामविशेषः सोऽप्यस्यां भवतीति दर्शितां भुजङ्गेशः पिङ्गलस्तां गीतिं गीतवानुक्तवान्—'आद्यर्धसमा गीतिः' इति सूत्रेणेत्यर्थः । ततश्चात्र द्वितीयार्धेऽपि पूर्णाः सगुरवः सप्तगणा न तु षष्ठे लघुमात्रमित्यादि ज्ञेयम् । इयमेका पथ्या, तिस्रो विपुलाः, द्वादश चपलाः । एतत्पूर्वोक्तत्वात्षोडशधा । तत्र पथ्यागीतिर्मूलमन्याः स्वय-

१. 'अर्धम्' इति पाठः. २. 'तु' इति पाठः.

मुदाहार्याः । अत्राद्यार्धे आर्या च द्वादश सहस्राण्यष्टौ शतानि च विकल्पाः । उत्तरार्धेऽपि तावन्त एव । परस्परहतौ कोट्यः षोडशाष्टत्रिंशल्लक्षाश्चत्वारिंशत्सहस्राणि च विकल्पाः । अङ्कतोऽपि १६३८४००००। पथ्यागीत्यादिचतुर्षु भेदेष्वियं संख्या ज्ञेया । द्वादशसु चपलागीतिषु पूर्वापरार्धविकल्पघाते संख्या स्वयमूह्या ॥

आर्याद्वितीयकेऽर्धे यद्गदितं लक्षणं तत्स्यात् ।
यद्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रूते ॥ ९ ॥

अत्रापि तदेति विशेषः । यद्यार्याद्वितीयार्धे यदुक्तं लक्षणं षष्ठलघ्वादि, तदुभयोरर्धयोः स्यात् । तदोपगीतिं पिङ्गलः 'अन्त्येनोपगीतिः' इत्यत्राहेत्यर्थः । अस्यां पूर्वार्धे षट्सहस्राणि चत्वारि शतानि विकल्पाः । उत्तरार्धेऽपि तावन्त एव । अन्योन्यघाते चतस्रः कोट्यो नव लक्षाः षष्टिः सहस्राणि विकल्पाः । अङ्कतोऽपि ४०९६०००० ॥

आर्याशकलद्वितयं व्यत्ययरचितं भवेद्यस्याः ।
सोद्गीतिः किल गदिता तद्वद्यत्यंशभेदसंयुक्ता ॥ १० ॥

आर्याद्वयं यस्या व्यत्ययेन विपर्यासेन यत्पूर्वार्धं तदुत्तरार्धम्, यदुत्तरार्धं तदत्र पूर्वार्धमित्येवंरूपेण रचितम्, सा किलेति प्रसिद्धा उद्गीतिरुक्ता । तेनैव तद्वदिति पथ्याद्यार्याभेदवदेव यत्या विरामेण योंऽशभेदः पादभेदस्तेन संयुक्तेत्यर्थः । अत्रार्यावद्विकल्पसंख्या । यथा ८१९२०००० ॥

आर्यापूर्वार्धं यदि गुरुणैकेनाधिकेन निधने युक्तम् ।
इतरत्तद्वन्निखिलं भवति यदीयमुक्तेयमार्यागीतिः ॥ ११ ॥

आर्यायाः पूर्वार्धं यद्येकेनाधिकेन गुरुणा निधने [ अन्ते ] युक्तं स्यात् । इतरच्च द्वितीयं समस्तं यदीयमर्धं तद्वत्पूर्वार्धवदियमार्यागीतिरिति मुनिनोक्ता । आर्यायां हि पूर्वार्धेन गुरुकाः सप्तगणकाः । इह तु पूर्णा अष्टौ गणा अर्धद्वयेऽपि भवन्ति । अन्तिमस्तु गणो द्विगुरुरेव । अन्यत्सर्वमार्यापूर्वार्धतुल्यमेवेति भावः । आर्यायाः पूर्वार्धविकल्पानामष्टमगणे विकल्पाभावात्परस्परताड्ये जातोऽङ्को द्वादश सहस्राण्यष्टौ च शतानि पूर्वार्धे । उत्तरार्धेऽपि तावदेव । अन्योन्यहतौ जातानि मुख्यगीतिवद्भेदसंख्या । अङ्कतोऽपि १६३८४०००० । केचि-

---

१. 'दलं यदीयमुदितैवम्,' 'यदीयमुदितेयम्' इति च पाठः.

स्त्वत्रोत्तरार्धेऽर्धशब्दमपठित्वेतरार्याया एवोत्तरार्धे तद्वदन्तेऽधिकैकगुरुयुक्तं स्यात्सार्यागीतिरिति । आर्यापूर्वार्धमित्यत्र समस्तं यथार्याशब्दं षष्ठ्यन्तं समासान्निष्कृष्टमनुषज्य पूर्वार्धस्याष्टगणत्वेन द्वात्रिंशन्मात्रताम्, उत्तरार्धस्यैकोनत्रिंशन्मात्रतां चाभिप्रेत्य व्याचक्षते । भवतु नामैतद्व्याख्याकौशलम्, किं तु बहूनामसंमतम्, सूत्राननुगुणं च, 'अर्धे वसुगण आर्या गीतिः' इति सामान्यतोऽर्धे वसुगणेऽष्टगणे सतीति । यद्वा आर्यार्धे यद्यष्टगणे स्यातामिति सूत्रकार आह । कैश्चित्त्वियं संगीतिः संज्ञिता, अपरैः स्कन्धकमिति । गीतीनामप्यार्यापूर्वकत्वादार्यात्वमस्त्येव । एताश्चतस्रोऽपि गीतयः प्रत्येकं पथ्यादिपूर्वोक्तषोडशार्या मिलित्वाशीतिः । तदुक्तं हलायुधेन—'एकैव भवति पथ्या तिस्रो विपुलास्ततश्चतस्रस्ताः । चपलाभेदैस्त्रिभिरपि भिन्ना इति षोडशार्याः स्युः ॥ गीतिचतुष्टयमित्थं प्रत्येकं षोडशप्रकारं स्यात् । साकल्येनार्याणामशीतिरेवं विकल्पाः स्युः ॥' इति । छन्दोविचितौ त्वेकादश परे गीतिभेदाः प्रदर्शिताः । ते यथा—आर्यैव दलद्वयेऽप्यधिकैकगुरुयुता संगीतिः । ममैव यथा—'आगमविद्यैकनिधिर्विबुधेन्द्रशतैरधीतनिगमविलासः । रामेश्वरभट्टगुरुर्जयति पिता मे पितामहतुल्यः' ॥(१)। पूर्वार्ध एवाधिकैकगुरुयुक् सुगीतिर्नाम । पितामहगुरुरिति पठित्वा पूर्वमेवोदाहरणम् (२) । यद्युत्तरार्ध एव तादृक्तदा प्रगीतिर्नाम । अधीतनिगमार्य इति पठित्वा प्रथममेवोदाहार्यम् (३) । सुगीतिरेव व्यत्यस्तार्धानुगीतिः । सुगीत्युदाहरणमेव व्यत्यस्तार्धे ज्ञेयम्(२) । प्रगीतिरेव व्यत्यस्तार्धा मञ्जुगीतिः । प्रगीत्युदाहरणं व्यत्यस्तार्धमत्रोदाहरणम् (५) । यद्यधिकैकगुरुणार्योत्तरार्धेन पठितार्धद्वया तदा विगीतिः । ममैव यथा—'विषयान्विषधरविषमान्संसृतिमपि नीरसां ज्ञातवतः । संसारसारभूते दशरथबाले मतिरतिस्थैर्यमियात् ॥' (६) । यद्युद्गीतिर्द्वयोरप्यर्धयोरधिकगुरुयुक्ता तदा चारुगीतिः । अत्र पूर्वोक्तं संगीत्युदाहरणमेव विपर्यस्तार्धं ज्ञेयम् (७) । आर्यागीतेरेवैकगुरुहीनोत्तरार्धतायां वल्गुगतिः । ममैव यथा—'पीनोन्नतकुचकलशा पीवरजघनोरुभारमन्थरयाता । पश्यन्ती प्रणयेन तरुणी कं वा न चालयेत्पुरुषम् ॥' (८) । तस्या एव पूर्वार्ध एव तथा चेल्ललितेति संज्ञा । अर्धयोर्व्यत्यासेन पूर्वमेवोदाहरणम् (९) । उपगीतिरेवाद्यार्धेऽधिकैकगुरुयुता प्रमदा नाम । ममैव यथा—'यस्य विलासवतीनां केलिकलाकौशलरतिर्विरतिः । मैथुनमात्ररसज्ञः शृङ्गविहीनः पुमान्स पशुः ॥' (१०) । सैवोत्तरार्धेऽधिकैकगुरुयुता चन्द्रिका नाम । व्यत्यस्तार्धे पूर्वमेवोदाहरणम् (११) । एतासामपि पूर्वोक्त-

पथ्यादिषोडशार्याणां संभिन्नतया प्रत्येकं षोडशधात्वे सति संख्या १७६। एतासामुदाहरणानि स्वयमूह्यानि। विस्तरभयात्तु नोच्यन्ते । पूर्वोक्तानां चतुर्विधगीतीनां च तथैव षोडशधात्वे संख्या ६४ । ऐक्ये गीतिसंख्या २४० । पूर्वोक्तषोडशशुद्धार्याभेदैक्ये संख्या २५६ ॥

इति श्रीनारायणभट्टविरचितायां वृत्तरत्नाकरटीकायां गीतिप्रकरणम् ॥

मात्राच्छन्दसां प्रकृतत्वाद्वैतालीयप्रकरणमारभते—

षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः ।
न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ॥ १२ ॥

वैतालीये छन्दसि विषमे, अर्थात्पादे, प्रथमे तृतीये च षट् कलामात्राः स्युः। समे पादे द्वितीये चतुर्थे चाष्टौ कलाः स्युः । अन्तउक्तानां कलानामन्ते परस्ताद् रलौ रगणलघू गुरुश्च भवतीति वैतालीयस्वरूपपरिच्छेदः । एतदुक्तं भवति—विषमे पादे चतुर्दश समे च षोडश मात्राः कार्याः । तन्मध्येऽन्तिमा अष्टौ मात्रा रेफलघुगुरुभिः कार्या इति । विषमे पश्चात्षट् समेऽष्टौ अवशिष्यन्ते, तासां निवेशने नियमविशेषमाह—ताश्चेति । समे ताः षट् कला निरन्तराः केवलाः षट् लघव एव न कार्याः, किंतु गुरुमिश्रा इत्यर्थः । समे विशेषोक्त्या विषमे स्वरुचिः । अत्रावशिष्टासु षट्स्वष्टसु च कला द्वितीया चतुर्थी षष्ठी च परया तृतीयपञ्चमसप्तमकलयाश्रिता मिलिता न भवन्ति, द्वितीयतृतीयकलादीनामेकेन गुरुणोपादानं न कार्यमित्याशयः । अत्र विषमपादयोराद्यासु षण्मात्रास्वष्टौ विकल्पाः । यथा—ऽऽऽ, ऽ।।ऽ, ।।ऽऽ, ।।।।।।, ऽऽ।।, ।।ऽ।।, ऽ।।।।, ।।।।ऽ. समपादयोराद्यास्वष्टमात्रासु त्रयोदश विकल्पाः—ऽऽऽऽ, ऽऽऽ।।, ऽऽ।।ऽ, ऽ।।ऽऽ, ।।ऽऽऽ. ऽऽ।।।।, ऽ।।ऽ।। ऽ।।।।ऽ, ।।।।ऽऽ, ।।ऽऽ।।, ।।ऽ।।ऽ, ।।ऽ।।।।, ।।।।ऽ।।, एते अर्थाभिवर्णक्रमेण निबद्धाः कैश्चित्—'मीनाङ्काः (१) सुरसङ्घैः (२) पङ्कजसौ (३) रभितजलाः (४) । तत्सारस (५) खगसंभृत (६) सज्जनमुदि (७) तवनकुकभि (८) ॥' एते विषमे पादे। 'हंसस्मेरा (१) अलिके नद्यो (२) नीरजवक्त्राः (३) कुवलयनेत्राः (४) । सुस्वच्छजलाः (५) सुतरङ्गभुजाः (६) केशरदशना (७) राजन्ते कृत (८) जनहर्षा भुवि (९) शारदरात्रिषु (१०) विमलनिशाकर (११) भानुप्रभृतिषु (१२) ननु पश्य सुतनु (१३) एते समे ॥' ततोऽष्टभिस्त्रयोदशगुणिताश्चतुरधिकं शतं वैतालीयस्याद्यार्धे भेदाः । एतावन्त एवापरार्धे । परस्परहतौ जातं दश सहस्राण्यष्टौ शतानि षोडश च।

अङ्कतोऽपि १०८१६ । इयमेवौपच्छन्दसिकापातलिकयोर्वक्ष्यमाणयोः संख्या ॥

वैतालीयभेदानाह—

पर्यन्ते र्यौ तथैव शेषमौपच्छन्दसिकं सुधीभिरुक्तम् ॥ १३ ॥

विषमसमपादयोः षण्णामष्टानां च कलानामन्ते र्यौ रेफयगणौ स्याताम्, शेषं षडष्टककलानियमादीनि तथैव सामान्यवैतालीयवदेव यदा तदा छन्दोविद्भिरौपच्छन्दसिकसंज्ञं वैतालीयमुक्तम् । वैतालीय एव प्रतिचरणमेकगुर्वाधिक्येन विषमपादे षोडश समपादे चाष्टादश मात्राः कार्या इति भावः ॥

आपातलिका कथितेयं भाद्गुरुकावथ पूर्ववदन्यत् ॥ १४ ॥

षण्णामष्टानां च मात्राणां पर्यन्ते भाद्भगणात्परौ गुरुकौ गुरू स्यातामिति रेफलघुगुरूणामपवादः । अथान्यच्छेषं पूर्ववद्वैतालीयवत् । सेयमापातलिका सुधीभिः कथितेति पर्यन्तसुधीशब्दानुषङ्गेण योज्यम् ॥

तृतीययुग्दक्षिणान्तिका समस्तपादेषु द्वितीयलः ॥ १५ ॥

समस्तेषु चतुर्ष्वपि पादेषु द्वितीयलो द्वितीया मात्रा तृतीयया युग् युक्ता चेत्स्यात्, तदा दक्षिणान्तिका नाम स्यादिति । चेत्तदाशब्दयोरध्याहारः कार्यः । सर्वेषु पादेषु द्वितीयो वर्णो गुरुरेव कार्य इति 'न समात्रपराश्रिता कला' इत्यस्यापवादः । शेषं यथाप्राप्तमिति भावः । इयं वैतालीयौपच्छन्दसिकापातलिकापूर्वकत्वेन त्रेधोदाहार्या । अस्मिन्भेदत्रयेऽपि विषमपादयोर्विकल्पौ द्वौ । यथा—ISIS, ISIII. समयोश्चत्वारो यथा—ISISS, ISIIIS, ISISII, ISIIIII. द्वयोश्चतुर्णां च परस्परहतावष्टौ पूर्वार्धे द्वितीयार्धेऽपि तावन्त एव । तयोरन्योन्यघाते चतुःषष्टिभेदा भवन्ति ॥

उदीच्यवृत्तिर्द्वितीयलः सक्तोऽग्रेण भवेदयुग्मयोः ॥ १६ ॥

अयुग्मयोर्विषमयोः प्रथमतृतीययोः पादयोर्द्वितीयलो द्वितीयमात्रा अग्रेण तदग्रिमेण लेन सक्तो युक्तश्चेत्, तदा उदीच्यवृत्तिरुदितेति वक्ष्यमाणानुषङ्गः । शेषं यथाप्राप्तम् । इयं वैतालीयौपच्छन्दसिकापातलिकापूर्वकत्वेन त्रेधोदाहार्या । अत्र द्वौ विषमयोर्विकल्पौ । यथा—SSII, SIIII. समयोः पूर्वोक्तास्त्रयोदश । परस्परहतौ षड्विंशतिः पूर्वार्धभेदाः । तावन्त एवापरत्र । परस्परहतौ जाता भेदाः षट्शतानि षट्सप्ततिश्च । अङ्कतोऽपि ६७६ ॥

---

१. 'उपच्छन्दसिकम्,' 'त्वौपच्छन्दसिकम्' इति च पाठः.

पूर्वेण युतोऽथ पञ्चमः प्राच्यवृत्तिरुदितेति युग्मयोः ॥ १७ ॥

अथेति यदीत्यर्थे वैलक्ष्ये वा । निपातानामनेकार्थत्वात् । युग्मयोर्द्वितीयचतुर्थपादयोः पञ्चमो लः पञ्चमी मात्रा पूर्वेण चतुर्थेन लघुना यदि युतः, एकेन गुरुणा चतुर्थपञ्चममात्रयोरुपादानं यदि स्यादित्यर्थः । तदा प्राच्यवृत्तिरुदितोक्ता पिङ्गलादिभिरिति । समासात्त्रिष्वष्टलशब्दमनुषज्य व्याख्येयं शेषं यथाप्राप्तम् । अनयोरपि उदीच्यवृत्तिप्राच्यवृत्त्योः 'न समात्र पराश्रिता कला' इत्यस्य पूर्ववदेवापवादः । सेयमपि पूर्ववत्त्रेधा ॥ अत्र विषमयोः पूर्वोक्ता अष्टौ विकल्पाः । समयोश्चत्वारः । यथा—ISISIS, IIISIS, SISIII, IIISIII. अष्टानां चतुर्भिर्हतौ द्वात्रिंशत्पूर्वार्धभेदाः । तावन्त एवोत्तरार्धे । परस्परहतौ भेदाश्चतुर्विंशत्यधिकसहस्रम् । अङ्कतोऽपि १०२४ ॥

यदा समावोजयुग्मकौ पूर्वयोर्भवति तत्प्रवृत्तकम् ॥ १८ ॥

यदा पूर्वयोरुदीच्यवृत्तिप्राच्यवृत्त्योः समौ तुल्यौ क्रमेणौजयुग्मकौ विषमसमपादौ स्याताम्, तत्तदा प्रवृत्तकं नाम । विषमयोः प्रथमतृतीययोः पादयोर्द्वितीयतृतीयमात्रायोगः । समयोस्तु चतुर्थपञ्चममात्रायोगः स्यादिति भावः । इदं वैतालीयौपच्छन्दसिकापातलिकापूर्वकत्वेन त्रेधोदाहार्यम् । अत्र पूर्वोक्तविषमसमविकल्पानामन्योन्यहतौ संख्या स्वयमूहनीया । एवमपरान्तिकादिष्वपि ॥

अस्य[1] युग्मरचितापरान्तिका ॥ १९ ॥

अस्य प्रवृत्तकस्य युग्मपादैर्या संपूर्णा रचिता सापरान्तिका नाम । पञ्चमी चतुर्थमात्रायुक्ता षोडशमात्रता चतुर्ष्वपि पादेषु कार्येत्यर्थः । इयं च वैतालीयौपच्छन्दसिकापातलिकापूर्वकत्वेन पूर्ववत्त्रेधा । कश्चित् 'अस्य वैतालीयादिच्छन्दोवृन्दस्य युग्मरचिता' इति व्याचख्यौ । तत्मते वैतालीयादिपूर्वकत्वेन तत्पूर्वकप्राच्यवृत्तिपूर्वकत्वेन च षोढा । उदाहरणानीति तु स्वयमूह्यानि । भेदाः ॥ २५६ ॥

अयुग्भवा[2] चारुहासिनी ॥ २० ॥

अस्य प्रवृत्तकस्यायुग्भवायुक्पादैर्विषमपादै रचिता चारुहासिनी । समस्तपादेषु चतुर्दशमात्रा द्वितीया तृतीयायुक्ता कार्येत्यर्थः । इयमपि पूर्ववत्त्रेधा । अस्येति वैतालीयादिच्छन्दोवृन्दपरत्वेन व्याचक्षाणस्य मते तु वैतालीयौपच्छन्दसिकापातलिकातदुदीच्यवृत्तिपूर्वकत्वेन षोढा । उदाहरणान्यूह्यानि । भेदाः २५६ । अन्येऽपि भेदा अन्यैरु-

---

१. 'यस्य' इति पाठः. २. 'अयुग्मगा' इति पाठः.

क्तास्ते स्वकीयैरुदाहरणैः प्रदर्श्यन्ते । यथा वैतालीयसमपादचतुष्टय-युतान्येयं दक्षिणान्तिका । यथा—'पुरुषश्रेष्ठतमः स पूरुषो विषयैर्यस्य मनो हृतं नहि । पुरुषक्षुद्रतरः स पूरुषो विषयैर्यस्य मनो हृतं मुहुः ॥' वैतालीयविषमपादरचितोत्तरान्तिका । यथा—'विषयान्विषमान्विषो-पमानवधार्य ततोऽवधीर्य च । कुरु सर्वेकचिन्तनं सदा यदि ते हित-मीहितं स्वकम् ॥' तथापातलिकाप्राच्यवृत्त्योर्विषमसमपादाभ्यां यत्क्र-मेण रचितोऽर्धपातलिका नाम । यथा—'यः पुरतो वक्त्यतिमिष्टं दोष-भाषणरतः परोक्षतः । वाञ्छसि सौख्यं त्यज तं द्राङ्मित्रसंज्ञितमरिं विषोपमम् ॥' तथाद्यापातलिकादीनां सप्तानां छन्दसां प्रतिपादमन्ते-ऽधिकैकगुरुयोगः स्यात्, तदा तन्नामकान्यौपच्छन्दसिकानि सप्त भव-न्ति । तत्रापातलिकौपच्छन्दसिकम् । यथा—'आपातलिकादिषु चेदेको गुरुरधिको भवति प्रतिपादान्ते । आपातलिकादिकसंज्ञायुगौपच्छ-न्दसिकं तदाभिप्रेतम् ॥' एवं दक्षिणान्तिकौपच्छन्दसिकादौ ग्रन्थगौर-वप्रसङ्गादस्मदनुक्तान्युदाहरणान्यूह्यानि । एवं च वैतालीयसंख्या सप्त-त्रिंशत् ३७ ॥

इति श्रीनारायणभट्टविरचितायां वृत्तरत्नाकरटीकायां वैतालीयप्रकरणम् ॥

---

अथ वक्त्रस्याष्टाक्षरत्वेनानुष्टुभि वक्त्रस्य व्यवस्थायामपि तद्वत्सकल-नियतगुरुलघुत्वाभावात्पथ्याचपलादिसंज्ञा कार्या । मात्रावृत्तनामसौ-कर्याच्च मात्रावृत्तप्रस्ताव एव लक्षणमाह—

**वक्त्रं नाद्यान्नसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम् ॥ २१ ॥**

आद्यादक्षरादूर्ध्वं नगणसगणौ न स्याताम्, मगणादिर्यथेच्छं स्यात्, अब्धेश्चतुर्थादक्षरादूर्ध्वं यो यगणः स्याद्यदि, तदा वक्त्रं ख्यातम् । तच्चा-नुष्टुभि ख्यातमुक्तमाचार्यैरिति । यदातदाशब्दाध्याहारेण ख्यातशब्दावृ-त्त्या च व्याख्येयम् । यथा—आद्याब्धेश्चेति गणग्रहणमपि संभवति तथा-नुष्टुभि ख्यातमित्यष्टाक्षरत्वसूचनागणचतुष्टयासंभवादब्धिग्रहणं स्यात्, अक्षरपरता । आद्यग्रहणस्यापि च तत्समभिव्याहाराद्गणग्रहणे चतुर्था-क्षरमादाय गणारम्भाच्चतुर्थाक्षरादूर्ध्वं यगणारम्भायोगाच्चाक्षरपरतैव । आद्यात्परतो नगणसगणनिषेधे न द्वितीयतृतीयवर्णात्परस्य गुरु ना-वश्यं भवतीति सूचितम् । अनुष्टुभि ख्यातमित्यनेनाष्टाक्षरपादता सू-चिता । अतश्चानुक्तोऽप्यष्टमो वर्णो ज्ञेयः । समयोश्च पादयोः प्रथमा-दक्षरादूर्ध्वं रगणोऽपि न कार्य इति संप्रदायः । अत्राद्ये पादे प्रथमस्थाने

गुरुलघुरूपौ द्वौ विकल्पौ, द्वितीये नसनिषेधाच्छेषाः षड्गणाः, तृतीयस्थान एको य एव, चतुर्थे स्थाने ग्लौ। अन्योन्यघाते चतुर्विंशतिः। एवं द्वितीयादिपादत्रयेऽपि प्रत्येकं चतुर्विंशतिः। तेषां परस्परहतौ जाता त्रयो लक्षाः एकत्रिंशत्सहस्राणि सप्त शतानि षट्सप्ततिः संख्या। अङ्कतोऽपि ३३१७७६। एषैव संख्या प्रत्येकं पथ्यावक्रादिषु त्रिषूह्या। संप्रदायमाश्रित्य द्वितीयचतुर्थपादयोर्द्वितीयस्थाने रगणस्यापि निषेधात्समयोः प्रत्येकं विंशतिर्भेदाः, विषमयोश्चतुर्विंशतिरेव। तेषामन्योन्यघाते जाता संख्या लक्षद्वयं त्रिंशत्सहस्राणि चत्वारि शतानि। अङ्कतोऽपि २३०४००॥

अब्धेर्य इत्यस्यापवादेनास्यैव भेदानाह—

युजोर्जेन सरिद्भर्तुः पथ्यावक्रं प्रकीर्तितम्॥ २२॥

युजोर्युग्मयोर्द्वितीयचतुर्थचरणयोः सरिद्भर्तुश्चतुर्थाक्षरात्परेण जगणेन पथ्यावक्रं प्रकीर्तितं पिङ्गलेन। 'पथ्या युजो ज्' इति सूत्र इत्यर्थः। विषमयोस्तु यगणः सामान्यप्राप्तः॥

ओजयोर्जेन[1] वारिधेस्तदेव विपरीतादि॥ २३॥

विषमपादयोश्चतुर्थादूर्ध्वं जगणे तदेव पथ्यावक्रं विपरीतशब्दादि विपरीतपथ्येति ज्ञेयमित्यर्थः। समयोर्य एव॥

चपलावक्रमयुजोर्नकारश्चेत्पयोराशेः॥ २४॥

अयुजोर्विषमयोः पयोराशेश्चतुर्थान्नकारश्चेन्नगणश्चेच्चपलावक्रम्। समयोर्य एव॥

यस्यां लः सप्तमो युग्मे सा युग्मविपुला मता॥ २५॥

युग्मे द्वितीये चतुर्थे च पादादेः सप्तमो वर्णो लो लघुर्यस्याः सा विपुला मता संमता। यद्यपि पथ्यायामपि युजोः सप्तमो लस्तथापि तत्र जगणेनैव अत्र तु नजभतैः सप्तमस्य लघुतेति न संकरः। तथापि जगणपक्षे संकर एवेति चेत्, तर्हि तत्र संज्ञाविकल्प एवास्तु। ये त्वत्र जेव सप्तमेनैव लघुतेत्यसंकरमाहुस्तेषा मूलस्य लक्ष्यविरोधो जगणेन लघुकरणात्। 'सैतवेन पथार्णवं तीर्णो दशरथात्मजः। रक्षःक्षयकरीं पुनः प्रतिज्ञां स्वेन बाहुना॥' इति सैतवमतेन विपुलोदाहरणे जकारेणैव वृत्तिकृता लघुकरणात्तद्विरोधश्चेति पूर्वमेवोत्तरं युक्तं संज्ञाविकल्प इति। अत्र समपादयोस्तृतीये स्थाने चत्वारो विकल्पाः शेषेषु प्राग्वत्। तेन समयोः परस्परहतौ षण्णवतिर्भेदाः विषमयोः प्रत्येकं

1. 'अयुजोः' इति पाठः.

पूर्ववच्चतुर्विंशतिः । परस्परहतौ संख्या त्रिपञ्चाशल्लक्षाः अष्टौ सहस्राः चत्वारि शतानि [षोडश] । अङ्कतोऽपि ५३८४१६ । अत्रायुग्मे यस्यां लः सायुग्मविपुलेत्यकारप्रश्लेषेणापि केचिद्व्याचक्षते । पादव्यत्ययं यत्रोदाहरणमाहुः । विपरीतपथ्याचपलावक्त्राभ्यां चैव भेदः । तत्र ज-गणनगणाभ्यां सप्तमस्य लघुता, अत्र तु भ-ताभ्यामपि तथात्वमिति । उदाहरणं च सप्तमस्य लघुत्वमात्रतात्पर्येण जगणेन न त्वभावेनोक्तमिति चाहुः ॥

सैतवस्याखिलेष्वपि[1] ॥ २६ ॥

सैतवस्याचार्यस्य मतेऽखिलेष्वपि पादेषु सप्तमो लः स्यादिति स्मृत इत्यध्याहारेण सप्तमो ल इति पादानुषङ्गेण व्याख्येयम् । संज्ञा विपुलेति निरुपपदैव । अत्र प्रतिपादं षण्णवतिर्भेदाः । तेषां परस्परहतौ संख्या अष्टौ कोट्य एकोनपञ्चाशल्लक्षाश्चतुस्त्रिंशत्सहस्राणि षट्शती षट्पञ्चाशच्च । अङ्कतोऽपि ८४९३४६५६ ॥

भेनाब्धितो भाद्विपुला ॥ २७ ॥

अब्धितश्चतुरक्षरात्परेण भेन भगणेन भाद् भ इत्यक्षरात्परा विपुला । भविपुलेत्यर्थः । केचिदत्र 'अखिलेष्वपि' इत्यनुवर्तयन्ति । वृत्तिकृतस्तु 'भ्रौ न्तौ च' इति सूत्रे 'सर्वतः सैतवस्येति निवृत्तम् । चपलायुजोनित्यस्मादयुग्ग्रहणमनुवर्तते' इति वदन्तो विषमपादविषया एव भ-विपुला इत्याहुः ॥

इत्थमन्या रश्चतुर्थात् ॥ २८ ॥

चतुर्थाक्षरात्परतश्चेद्रगणस्तदेत्थमन्या यथा भाद्विपुला तथा रादिति र-विपुलेत्यर्थः ॥

नोऽम्बुधेश्चेन्नविपुला ॥ २९ ॥

अम्बुधेश्चतुर्थान्नो नगणश्चेत्तदा नपूर्वान्या विपुला । न-विपुलेत्यर्थः । एवं म-याभ्यां तत्पूर्वे विपुले भवतः ॥

तोऽब्धेस्तत्पूर्वान्या भवेत् ॥ ३० ॥

अत्रैतासु चतसृषु पादचतुष्केऽपि तत्तद्गणयोगस्य ये सत्वमाहुस्तेषां मते न यत्रैकस्मिन्द्वयोर्वा तत्तद्गणयोगस्तत्रासां परस्परसंसर्गेणान्ये भेदा ज्ञेयाः । वृत्तिकृन्मते तु विषमपादयोरेतद्गणयोगः, अन्ययोस्तु सप्तमस्य लघुत्वमात्रम् । यत्र तु चतुर्ष्वपि पादेषु भादियोगस्तस्यानुष्टुभ्यमेव । न तु वक्त्रत्वमिति विवेकः । तत्राप्य

1. 'सैव तस्य' इति पाठः.

युक्पादस्य जातिपरत्वे द्वयोरप्ययुजोर्भगणादियोगः, व्यक्तिपरत्वे त्वन्यतराङ्गीकारेणापि लक्षणार्थं तद्विरोधे तृतीये वा भगणादियोगः । जातिपक्षे भ-विपुलोदाहरणम्—'इयं सखे चन्द्रमुखी स्मितज्योत्स्ना च मानिनी । इन्दीवराक्षी हृदयं दहतीति तथापि मे ॥' आद्ये भ-विपुलोदाहरणम्—'उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता । समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च ॥' तृतीये—'प्रोल्लसत्कुण्डलप्रोतपद्मरागदलत्विषा । कृष्णोत्तरासङ्गरुचं विदधच्चौतपल्लवीम् ॥' रेफविपुलायाः क्रमेणोदाहरणानि—'सकारनानारकासकायसाददसायका । रसाहवा वाहसारनादवाददवादना ॥', 'महाकविं कालिदासं वन्दे वाग्देवतागुरुम् । यज्ज्ञाने विश्वमाभाति दर्पणे प्रतिबिम्बवत् ॥', 'कामिनीभिः सह प्रीतिः कस्मै नाम न रोचते । यदि न स्याद्वारिवीचिचञ्चलं हन्त जीवितम् ॥' न-विपुलोदाहरणानि क्रमेण—'युयुत्सुनेव कवचं किमामुक्तमिदं त्वया । तपस्विनो हि वसते केवलाजिनवल्कले ॥', 'अथानाथाः प्रकृतयो मातृबन्धुनिवासिनम् । मौलैरानाययामासुर्भरतं स्तम्भिताश्रुभिः ॥', 'तव मन्त्रकृतो मन्त्रैर्दूरात्संशमितारिभिः । प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः ॥' तत्र त-विपुलोदाहरणानि—'सा वैदुष्ये प्रौढिर्यदि सर्वशास्त्रविशारदा । सानुगामिनी विस्मेरा यस्योक्तौ दण्डिताः परे ॥' 'लोकवत्प्रतिपत्तव्यो लौकिकोऽर्थः परीक्षकैः । लोकव्यवहारं प्रति सदृशौ बालपण्डितौ ॥' स-विपुलोदाहरणानि—'सखा गरीयाञ्शत्रुश्च कृत्रिमस्तौ हि कार्यतः । स्याताममित्रौ मित्रे च सहजप्राकृतावपि ॥' 'यियक्षमाणेनाहूतः पार्थेनाथ द्विषन्मुरम् । अभिचैद्यं प्रतिष्ठासुरासीत्कार्यद्वयाकुलः ॥', 'षड्गुणाः शक्तयस्तिस्रः सिद्धयश्चोदयास्त्रयः । ग्रन्थानधीत्य व्याकर्तुमिति दुर्मेधसोऽप्यलम् ॥' य-विपुलोदाहरणानि—'ततः कुमुदनाथेन कामिनीगण्डपाण्डुना । नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलंकृता ॥' 'तथापि यन्मय्यपि ते गुरुरित्यस्ति गौरवम् । तत्प्रयोजककर्तृत्वमुपैति मम जल्पतः ॥' एवं ज-विपुलाप्युदाहार्या । तत्र तु समपादयोश्चतुर्थादूर्ध्वं जगणेन पथ्यावक्त्रता सप्तमस्य लघुतागात्रत्वे ज-विपुलात्वमिति विवेकः । म-विपुला तु कविप्रयोगाभावान्नास्ति । अन्येषां तु मते युयुत्सुनेवेत्यादीनां विषमयोश्चपलादित्वात्समयोस्तु पथ्यात्वाच्चपलापथ्यावक्त्रादिसंज्ञा भवन्ति । एवं विपुलापथ्येत्यादिसंज्ञा ज्ञेयाः । अत्र वृत्तिकृन्मते सर्वासु भ-विपुलादिषु विषमपादयोः प्रत्येकं चतुर्विंशतिर्भेदाः, समयोः प्रत्येकं षण्णवतिः । परस्परहतौ युग्मविपुलावत्संख्या ज्ञेया । अन्येषां मते तु सुखवक्त्रवत्संख्या । तथा

संकीर्णत एषां संकीर्णविपुलावक्त्रं भवति । भारवेः—'कच्चित्काले प्रसरता कच्चिदापत्य निघ्नता । शुनेव सारङ्गकुलं त्वया भिन्नं द्विषां कुलम् ॥' कुमारे—'यदध्यक्षेण जगतां वयमारोपितास्त्वया । मनोरथस्याप्यपथं मनोविषयमात्मनः ॥' माघे—'भवद्भिरामवसरप्रदानाय वचांसि नः । पूर्वरङ्गप्रसङ्गाय नाटकीयस्य वस्तुनः ॥' इत्यादयो विपुलाभेदा अनन्ता एव कविप्रयोगेषु द्रष्टव्याः । सर्वेषु तु प्रायेण चतुर्थवर्णस्य गुरुतेति सांप्रदायिकाः ॥

इति श्रीनारायणभट्टविरचितायां वृत्तरत्नाकरटीकायां वक्त्रप्रकरणम् ॥

अथ मात्रासमान्याह—

द्विर्गुणितवसुलघुरचलधृतिरिति[१] ॥ ३१ ॥

वर्णच्छन्दोऽप्येतद्विगुणितवसुपदस्योत्तरानुवृत्तिसिद्ध्यर्थं प्रकीर्णकेष्वभ्यधायि । तेन मात्रासमकादिषु षोडशमात्रत्वमधिकृतं भवति । द्विगुणवसुलघुर्द्वावष्टौ लघवो यस्यां साचलधृतिरिति कथ्यते । चकाराद्गीत्यार्थेति संज्ञा भवति इति पिङ्गलमतसंग्रहः । षोडशलघुपादेत्यर्थः ॥

मात्रासमकं नवमो लगान्तम्[३] ॥ ३२ ॥

यत्र पादे नवमो लघुरेव गुरुश्चान्तनियतस्तन्मात्रासमकसंज्ञम् । नवमान्त्ययोर्लघुगुरुनिगमाच्छेषे नियमाभावः सूचितः । सर्वथा षोडशमात्रता कार्येति भावः । सर्वेषु मात्रासमेषु सममात्रा परमात्रया युक्ता न कार्येत्यपि संप्रदायः । ततश्च प्रथमे जगणाभावाच्चत्वारो गणविकल्पाः । यथा—ऽऽ, ॥ऽ, ऽ॥, ॥॥, द्वितीये त्रयः—ऽऽ, ऽ॥, ॥ऽ. मध्यगुरुसर्वलघू विश्लोकस्येष्टत्वान्न भवतः । तृतीये एकः—॥ ऽ. 'नवमो ल्' इति वचनादादिगुरुर्भवति । मध्यगुरुसर्वलघू तु वासिकालक्षणस्पृष्टत्वान्न भवतः । चतुर्थे द्वौ—ऽऽ, ॥ऽ. गन्तत्वाभिधानादन्ये गणा न भवन्ति । एतेषां विकल्पानामन्योन्यघाते प्रतिचरणं चतुर्विंशतिर्भेदाः चतुर्णां चतुर्विंशत्यङ्कानामन्योन्यहतौ वक्त्रवदेव जाता संख्या लक्षत्रयम् एकत्रिंशत्सहस्री षट्सप्तत्यधिकसप्तशती चेति ॥

जौ[४] ल्नावथाम्बुधेर्विश्लोकः ॥ ३३ ॥

अथेत्यथवेत्यर्थे । अम्बुधेः कलाचतुष्टयादूर्ध्वं जगणोऽथवा लौ चतुर्लघुर्वा गणः स्यात् । शेषं पूर्ववत् । स विश्लोको नाम मात्रासमकम् । यद्यपि 'विश्लोकः पञ्चमाष्टमौ' इति सूत्रे पञ्चमाष्टममात्रयोर्लघुत्वमात्रमुक्तम्,

---

१ 'द्विक' इति पाठः. २ 'इह' इति पाठः. ३ 'नवमो लान्तम्', 'नवमो लगोऽन्तम्', 'नवमा लगन्तम्' इति च पाठः. ४ 'जो न्लौ', 'नान्लौ' इति च पाठः.

तथापि पञ्चमाष्टमयोर्लघुता चतुर्थमात्रानन्तरं जगणचतुर्लघ्वोरेव भवति, नान्यथेत्यभिप्रायेणैवमूचिवान् । जपक्षे इदमेवोदाहरणम् । लपक्षे तु 'सेव्यो रघुपतिरामहितार्थम्' । अत्राद्यगणे विकल्पाश्चत्वारः । यथा—ऽऽ, ।।ऽ, ऽ।।, ।।।।. द्वितीये द्वौ—।ऽ।, ।।।।. तृतीयेऽपि द्वौ—ऽऽ, ऽ।।. मध्यगुर्वन्तगुरुसर्वलघुरूपं भेदत्रयं तु मात्रासमचित्रापादकत्वान्न भवति । चतुर्थे गुर्वन्तगणद्वयम्—।।ऽ, ऽऽ. एतेषां परस्परघाते द्वात्रिंशत्सन्ति पादभेदाः । एतेषां घाते जाता संख्या दश लक्षा अष्टाचत्वारिंशत्सहस्राणि पञ्च शतानि षट्सप्ततिः । अङ्कतोऽपि १०४८५७६ ॥

तद्युगलाद्वानवासिका स्यात् ॥ ३४ ॥

तद्युगलादम्बुधियुगलादष्टमात्रानन्तरं यति जो न्लौ वा स्यात् सा वानवासिकेति । 'जो न्लावथ' इति पदत्रयमनुषज्य योज्यम् । अत्रापि 'द्वादशश्च वानवासिका' इति सूत्रे द्वादशचकारलभ्यनवमयोर्लघुतोक्ता, सा चैवमेव नान्यथेत्येवमुक्तम् । जपक्ष इदमुदाहरणम् । लपक्षे यथा—'लोकहितार्थं हरिहरमूर्तौ' । अत्राद्ये गणे विकल्पाश्चत्वारः—ऽऽ, ।।ऽ, ऽ।।, ।।।।. द्वितीये त्रयः—ऽऽ, ऽ।।, ।।ऽ. तृतीये द्वौ—।ऽ।, ।।।।. चतुर्थेऽपि द्वौ—ऽऽ, ।।ऽ. एतेषामन्योन्यताडने भेदाः प्रतिपादमष्टाचत्वारिंशत् । अन्योन्यहतौ जाता संख्या त्रिपञ्चाशल्लक्षा अष्टौ सहस्राणि चत्वारि शतानि षोडश च । अङ्कतोऽपि ५३०८४१६ ॥

वाणाष्टनवसु यदि लश्चित्रा ॥ ३५ ॥

वाणाः पञ्च पञ्चमाष्टनवसु यदि लघुः स्यात् । शेषं पूर्ववत् । तदा चित्रा नाम । अस्यामाद्ये गणे चत्वारो विकल्पाः पूर्ववत् । द्वितीयेऽपि द्वौ—।ऽ।, ।।।।. तृतीये त्रयः—।।ऽ, ।ऽ।, ।।।।. चतुर्थे द्वौ—ऽऽ, ।।ऽ. अन्योन्यघाते प्रतिपादं भेदसंख्या अष्टाचत्वारिंशत् । अन्योन्यगुणने पूर्वैव संख्या ॥

[1]उपचित्रा नवमे परयुक्ते ॥ ३६ ॥

नवमे मात्रास्वरूपे दशमेन परेण युक्ते सति मिलिते सत्युपचित्रा नाम । शेषं प्राग्वत् । जयदेवस्त्वेकादशद्वादशादिमात्रास्वपि नियममाह—'अष्टभ्यो गो ल्यावुपचित्रा' इति । अष्टकलानन्तरं गुरुलघुयगणा इत्यर्थः । अत्र तृतीयगणे द्वौ विकल्पौ—ऽऽ, ऽ।।. अन्ये गणविकल्पा मात्रासमकवत् । अन्योन्यघाते प्रतिपादं भेदा अष्टाचत्वारिंशत् । अन्योन्यघाते संख्या प्राग्वत् ॥

---

१ 'नवमे भवति गुराबुपचित्रा' इति पाठः.

यदतीतकृतविविधलक्ष्मयुतैर्मात्रासमादिपादैः कलितम् ।
अनियतवृत्तपरिमाणयुक्तं प्रथितं जगत्सु पादाकुलकम् ॥ ३७ ॥

अतीतानि पूर्वोक्तानि कृतानि विविधानि नानाप्रकाराणि यानि लक्ष्माणि लक्षणानि तद्युक्तैर्मात्रासमादीनां पञ्चानां पादैः कलितं रचितं तथानियतवृत्तपादचतुष्केऽपि नियतैकवृत्तलक्षणहीनं परिमाणे च षोडशमात्रपादत्वेन युक्तं ततः कर्मधारयः । एतादृशं यद्वृत्तं तत्पादाकुलकमित्यन्वर्थसंज्ञा ज्ञेयेति तच्छब्दाध्याहारेण योज्यम् । अथ प्रथमपादे मात्रासमकविश्लोकचित्राणां लक्षणयोगः, विश्लोकोपचित्रयोर्द्वितीये, मात्रासमवासिकयोस्तृतीये, उपचित्राविश्लोकयोश्चतुष्कयोर्द्विश्चतुर्थे इति । इदं च प्रतिपादमनेकलक्षणयोगं मत्वोदाहरणं मन्तव्यम् । अन्ये तु प्रतिपादमेकलक्षणयोगं वदन्तः समुदितेषु विविधलक्षणयोगाभिप्रायेणेदं व्याचक्षते । वयं तूभयथा व्याख्याने दोषाभावं वदामः । अत एव मात्रासमकादिप्रकृत्या एभिः पादाकुलकमिति सूत्रकारः सामान्यत एवाह । तथा मात्रासमकविश्लोकवानवासिकोपचित्राणामसंकीर्णं यावदुदाहरणं चाह वृत्तिकृद्यथा—'अलिवाचालितविकसितचूते काले मदनसमागमदूते । स्मृत्वा कान्तां परिहृतसार्थः पादाकुलकं धावति पान्थः ॥' इति । संकीर्णोदाहरणं तु मूल एव । तेनोभयथापि न दोषः । अत्र पञ्चानां मात्रासमकादीनां परस्परसंकरे अनन्ता एव भेदाः । तत्र यथा द्वयोर्द्वयोः संकरे चत्वारिंशदधिकं शतं भेदा भवन्ति । तद्यथा—

| १२३४ |
|---|
| २३४५ |

अत्रैककोष्ठस्याङ्कद्वयसंज्ञाङ्को वृत्तद्वयस्य संकरे वक्ष्यमाणोपजातिप्रस्तारमार्गेण चतुर्दश चतुर्दश प्रतिकोष्ठं भेदा भवन्ति । एवं च प्रथमद्वितीययोः प्रथमतृतीययोः प्रथमचतुर्थयोः प्रथमपञ्चमयोः संकरे चत्वारश्चतुर्दशका मिलिताः षट्पञ्चाशद् (५६) भवन्ति । तथा द्वितीयतृतीयद्वितीयचतुर्थद्वितीयपञ्चमानां संकरे द्विचत्वारिंशत् (४२) । तथा तृतीयचतुर्थतृतीयपञ्चमानां संकरेऽष्टाविंशतिः(२८) । तथा चतुर्थपञ्चमयोः संकरे चतुर्दश (१४) इति । सर्वेषां मेलने शतमेकं चत्वारिंशच्च (१४०) । एवं त्रयाणां चतुर्णां संकरेऽप्यूह्याः । एतेषामुदाहरणान्यूह्यानि । विस्तरभयात्तु नोच्यन्ते । अत्राचलधृत्यादीनां सर्वेषां षोडशमात्रपदत्वेन समत्वान्मात्रासमकसंज्ञा ॥

१ 'सहितं' इति पाठः.

अथोक्तानां वक्ष्यमाणानां च वृत्तानां गुरुलघुमात्रावर्णं यथापरिज्ञानोपायमाह—

वृत्तस्य लां विना वर्णैर्गा वर्णा गुरुभिस्तथा ।
गुरवो लैर्दले नित्यं प्रमाणमिति निश्चितम् ॥ ३८ ॥

वृत्तस्य ला मात्रा वर्णैर्विना गा गुरवो ज्ञेया इत्यध्याहारः । ला वर्णा गा इत्यादिभिः शब्दैस्तत्तत्संख्या लक्ष्यते । ततश्चायमर्थः—यदि वृत्तस्य मात्रावर्णयोः संख्या विज्ञाता गुरुलघुसंख्या चाज्ञाता तदा मात्रासंख्यामपनीयावशिष्टा गुरुसंख्या ज्ञेयेति, वर्णसंख्यामध्ये च ज्ञाता गुरुसंख्यामपनीयावशिष्टा लघुसंख्या ज्ञेयेत्याशयः । यदि तु मात्राणां गुरूणां च ज्ञातसंख्यत्वं वर्णाश्चाज्ञातसंख्यास्तदा तज्ज्ञानोपायमाह—वर्णा इति । तथा वृत्तमात्रागुरुभिर्विना वर्णा ज्ञेयाः । वृत्तमात्रासंख्यायां गुरुसंख्यामपनीयावशिष्टा वर्णसंख्येत्यर्थः । वृत्तमात्रालघुसंख्याया गुरुलघुसंज्ञाने सति गुरुज्ञाने प्रकारान्तरमाह—गुरव इति । वृत्तस्य ला इत्यनुषङ्गः । वृत्तस्य मात्रा लैर्लघुभिर्विना दलेऽर्धे कृते गुरवो ज्ञेयाः। वृत्तमात्रासंख्यायां लघुसंख्यामपनीयावशिष्टां संख्यामर्धीकृत्य तावत्प्रमाणा गुरुसंख्येत्यर्थः । उक्तां गुर्वादिसंख्यामुपसंहरति—नित्यमिति । इत्यमुना प्रकारेण प्रमाणं गुर्वादीनां नित्यं सर्वदा निश्चितं भवतीति शेषः । वृत्तस्येत्युपलक्षणं गद्यादावपि संभवात् । अत्र च गुरुवर्णसंख्याज्ञानोपायप्रदर्शनमुपलक्षणार्थम् । तथा हि मात्रावर्णगुरुलघुचतुष्टयात्मके वृत्ते द्वयोर्द्वयोरियत्तापरिच्छेदेऽन्ययोः संख्यापरिच्छित्तेः । तद्यथा—मात्रावर्णयोरियत्तापरिच्छेदेऽन्ययोः संख्यापरिच्छित्तेः । तद्यथा—मात्रावर्णयोर्मात्रालघ्वोर्वर्णगुर्वोर्वर्णलघ्वोर्मात्रागुर्वोर्गुरुलघ्वोश्च षट्सु द्विकेष्वेकैकद्विकजाते परे द्विकमुक्तया दिशा ज्ञेयमिति । इदं सर्वमुदाहरणे योज्यते—'वागर्थाविव संपृक्तौ' इत्यत्र चतुर्दशमात्रास्वष्टरूपां वर्णसंख्यामपनीयावशिष्टाः षड् गुरवो वर्णसख्या, पूरकौ च द्वौ लघू । एवं षड्रूपां गुरुसंख्यामपनीयावशिष्टा वर्णा अष्टौ, गुरूणां षट्त्वादवशिष्टौ द्वौ लघू । एवं लघुद्वयमपनीयावशिष्टद्वादशसंख्यायामर्धितायां षट्संख्या गुरवः, गुरुभिर्द्वादशमात्रासिद्धेश्चतुर्दशमात्रासिद्ध्यर्थं द्वौ लघू इति । एवं वर्णगुरुज्ञाने वर्णलघुज्ञाने गुरुलघुज्ञाने चेतरद्वयज्ञानं योज्यम् । एवं सर्वेषु गद्यपद्येषु ॥

इति श्रीनारायणभट्टविरचितायां वृत्तरत्नाकरटीकायां मात्रासमप्रकरणम् ॥

---

१ 'लो' इति पाठः.

मात्रानियमघटितत्वान्मात्रावृत्तप्रसङ्गेन द्विखण्डकान्याह—

शिखिगुणितदशलघुरचितमपगतलघुयुगलमपरमिदमखिलम् ।
सगुरु शकलयुगलकमपि सुपरिघटितललितपदविततिं भवति शिखा ॥ ३९ ॥

गार्हपत्याहवनीयदक्षिणाग्नयस्त्रयोऽग्नयः । तैस्त्रिधाख्या तत्संख्या लक्ष्यते तेन शिखिभिर्गुणितास्त्रिगुणीकृता ये दश लघवस्तै रचितमेव शकलमित्यध्याहारः, अपरमित्यभिधानात् । तच्चापगतं न्यूनं लघुद्वयं तस्मात्तादृक्कार्यम् । अपरं द्वितीयम् । शकलमित्यर्थः । इदं पूर्वोक्तमखिलं समग्रं लघुना न्यूनं त्रिंशल्लघुकं भवति । शकलयुगलकमर्धद्वयमपि सगुरु अन्तेऽधिकैकगुरुयुक्तं सुष्ठु परिघटिता रचिता ललिता पदविततिः पदरचना यत्र तादृशं भवति शकलं युगलं यस्यां सा शिखेति यत्तच्छन्दोऽध्याहारेणार्थः । अयं भावः—पूर्वार्धेऽष्टाविंशतिर्लघव एको गुरुरिति एकोनत्रिंशदक्षराणि, उत्तरार्धे त्रिंशल्लघव एको गुरुरित्येकत्रिंशदक्षराणि यत्र साशिखेति । सुपरिघटितेति पदेन श्रुतिसुखकर्त्री यतिः कार्येति सूचयति ॥

विनिमयविहितशकलयुगलकलितपदविततिविरचितगुणनिचया ।
श्रुतिसुखकृदियमपि जगति ञि जशिर उपगतवति सति भवति खजा ॥ ४० ॥

इयमेव शिखा यदि विनिमयेन व्यत्यासेन विहितं निवेशितं यच्छकलयुगलं तेन कलिता घटिता पदसमुदायकृतसौकुमार्यादिगुणसमुदायवती च कलितान्तस्य पदादिना कर्मधारयः श्रुतिसुखकारिणी वेति पूर्ववद्यतिः कार्येति सूचितम् । ञि ञकारे जशिर इति जकारप्रागुदाहरणं प्राप्ते सति खजा भवन्ति । खञ्जेति यावत् । गुरुद्वयस्य छन्दसि प्रवेशयितुमशक्यत्वादुक्तिप्रकारोऽयम् । विनिमयविनिहितशकलयुगलकलितपदविततिविरचितगुणनिचयेति युगलान्तस्य लघ्वित्यादिना कर्मधारयः । यद्यपि सूत्रकारेण 'अर्धं' इत्यधिकृत्य 'शिखैकोनत्रिंशदेकत्रिंशदन्ते ग्' इति 'खञ्जा महत्ययुजि' इति च वदता पूर्वोक्तनियमवदेकोनत्रिंशदक्षरैकत्रिंशदक्षररचितक्रमलघुक्रमवत्पादद्वयघटितार्धद्वयवत्यौ विंशत्यधिक-

१ 'युगुलकम्' इति पाठः. २ 'निचिति' इति पाठः. ३ 'लघुललितपद' इति पाठः. ४ 'गण' इति पाठः.

शताक्षरैः शिखाखञ्जे उक्ते अत्र षष्ट्यक्षरे एवेति विरोधस्तथापि ग्रन्थान्तरपर्यालोचनयैवमुक्तिः । यद्वा सूत्रकारोक्तिशिखाखञ्जाभ्यामेते अन्ये एव सूत्रानुक्ते एव प्रोक्ते। सूत्रोक्ते तु चतुर्थाध्यायेऽर्धसमत्वात्स्वयमूह्ये। अथवोभयत्रापि शकलशब्दाववयववचनत्वात्पादरूपावयवपरौ कृत्वा मूलोदाहरणे चार्धविषये मत्वार्धसमत्वेऽपि च मात्रानियमात्मकत्वान्मात्रावृत्तप्रकारेणोक्तिं समाधाय सूत्रानुसारः कार्य इति सर्वमूह्यम्।

अष्टावर्धे गा द्व्यभ्यस्ता यस्याः सानङ्गक्रीडोक्ता।
दलमपरमपि वसुगुणितसलिलनिधिलघु कविरचितपदविततिर्भवति ॥ ४१ ॥

यस्य अर्धेऽष्टौ गा गुरवो द्व्यभ्यस्ता द्विगुणाः। षोडशेत्यर्थः । अपीति चार्थः। अपरं च दलं द्वितीयमपि वसवोऽष्टौ तैर्गुणिताः सलिलनिधिलघवश्चत्वारो लघवो द्वात्रिंशद्यत्र तत्तादृक्कविना रचिता पदानां विततिर्विस्तरो यत्र तदा भवति सानङ्गक्रीडेति संज्ञयोक्ता वृत्तज्ञैः । पूर्वार्धे षोडश गुरवः, उत्तरार्धे द्वात्रिंशल्लघवः कार्या इति तात्पर्यार्थः। कवीत्यादिना श्रुतिसुखा यतिर्भवतीत्यसूसुचत्। पैङ्गले त्वियं सौम्येति संज्ञितम् । इयमेव व्यत्यस्तार्धतायां ज्योतिराख्या भवति । उदाहरणं तु—'यदि सुखमनुपममपरमभिलषसि परिहर युवतिषु रतिमतिशयमिह । आत्मज्योतिर्योगाभ्यासाद्दृष्ट्वा दुःखच्छेदं कुर्याः ॥' अनयोर्द्वयोः शिखे सामान्यसंज्ञा पैङ्गल उक्ता ॥

त्रिगुणनवलघुरवसितिगुरुरिति दलयुगलकृततनुरतिरुचिरा[1] ॥४२॥

त्रिगुणा नव लघवो यत्र । सप्तविंशतिरित्यर्थः । अवसितावक्साने गुरुर्यस्याः सा तथा इत्यमुना प्रकारेणार्धद्वयरचितशरीरातिरुचिरा संज्ञा। पैङ्गले त्वियं चूलिकेत्युक्ता। अर्धसमत्वेऽप्यस्य मात्रामात्रघटितत्वादत्रोक्तिः । 'चूलिकैकोनत्रिंशदन्ते ग्' इति सूत्रपाठपक्षेणैवमुक्तम् । 'चूलिकार्धमेकोनत्रिंशदेकत्रिंशदन्ते ग्' इति पाठे तु प्रथमं द्वितीयं चार्धं क्रमेणैकोनत्रिंशदेकत्रिंशन्मात्रं भवति, अन्ते च मात्राद्वयस्थाने गुरुरेकः स्यात्सा चूलिकेति सूत्रार्थः। अस्मिन्पक्षे मूलानुक्तमुदाहरणं ममैव—'रघुकुलनलिनविकसनशशभृति दशमुखरिपुकुलतिमिरहरे। विषधरविषमविषयविषहरमहसि कुरु रतिमिह दशरथ-

---

1 'इह रुचिरा' इति पाठः.

तनये ॥' अत्र सूत्रेऽर्धग्रहणात्पादनियमो नास्ति । इह चावस्थितिगुरुरिति पदेन गुरावेवावसानं नान्यत्रेति सूचितम् ॥

इति श्रीमद्भट्टरामेश्वरसूनुनारायणभट्टविरचितायां वृत्तरत्नाकरव्याख्यायां मात्रावृत्ताधिकारो नाम द्वितीयोऽध्यायः ॥

---

## तृतीयोऽध्यायः ।

एवं मात्रावृत्तान्यभिधायाधुना वर्णवृत्तेषु सुवृत्तानि कीर्तय इति उक्ता इति । अधिक्रियत इति शेषः । सप्तम्यन्तपाठे तु भेदा अभिधीयन्त इति । एवमत्युक्तादिष्वपि व्याख्येयम् ॥

अथोक्ता (१)—

गुः श्रीः ॥ १ ॥

एकाक्षरपादायामुक्तायां गुरेकश्चेत्पादः श्रीर्नाम । लक्ष्यलक्षणयोरेकाक्षरेण पादेनासंग्रहादर्धोदाहरणमेतत् । 'नोक्ता उक्तादिभेदा ये ग्रन्थगौरवभीतितः । तांस्तथा शब्दचिह्नेन वदामोऽन्यत्रदर्शनात् ।' यथा—'अस्मिन्पितृकृते नव्ये काव्ये रामकुतूहले । उक्ता उक्तादयो व्यस्ता विवेक्तव्याः सुयुक्तिभिः ।' अत्र वक्ष्यमाणसंख्याख्यानप्रकारेण वृत्तभेदः २ । न च सुप्रतिष्ठान्तानां पञ्चानां जातीनां सूत्रानुक्तत्वान्निर्मूलतेति वाच्यम् । 'द्विकौ ग्लौ' इति प्रस्तारकथने, 'परे पूर्णम्' इति रूपप्रस्तारकथने च सूत्रकारेणापि दर्शितत्वात् ॥

बहुतरप्रचाराभावात्तु गाथाभेदवल्लक्षणानुक्तेति निरूपयति—

अथात्युक्ता (२)—

गौ स्त्री ॥ २ ॥

द्वौ गुरू यदि पादे स्तस्तदा स्त्री नाम । अत्र वृत्तसंख्या ॥ ४ ॥

अथ मध्या (३)—

मो नारी ॥ ३ ॥

मो मगणश्चेत्पादस्तदा नारी नाम ॥

रो मृगी ॥ ४ ॥

रगणश्चेत्पादस्तदा मृगी । अत्र संख्या ८ ॥

अथ प्रतिष्ठा (४)—

म्गौ चेत्कन्या ॥ ५ ॥

---

१ 'ग', 'ग्' इति पाठौ

म्गौ मगणगुरू चेत्पादश्चतुर्गुरुरित्यर्थस्तदा कन्या । अत्र संख्या १६ ॥

अथ सुप्रतिष्ठा (५)—

भ्गौ गिति पङ्क्तिः ॥ ६ ॥

भगणगुरू पुनर्गुरुश्चेत्येवं पङ्क्तिः । संख्या ३२ ॥

अथ गायत्री (६)—

त्यौ [1]स्तस्तनुमध्या ॥ ७ ॥

त्यौ तगण-यगणौ यदि स्तो भवतस्तनुमध्येति । यदि तदेत्यध्याहार्यम् ॥

शशिवदना न्यौ ॥ ८ ॥

नगण-यगणौ यदि पादस्तदा शशिवदना नाम ॥

विद्युल्लेखा मो मः ॥ ९ ॥

मगणौ चेत्पादस्तदा विद्युल्लेखा नाम ॥

त्सौ चेद्वसुमती[2] ॥ १० ॥

तगणःसगणौ चेत्पादस्तदा वसुमती । गायत्र्यन्तेषु सर्वेषु पादेषु पादान्त एव यतिरित्याम्नायः । तत्र संख्या ६४ ॥

अथोष्णिक् (७)—

म्सौ गः स्यान्मदलेखा ॥ ११ ॥

मगणसगणगुरुभिर्मदलेखा नाम ॥

तथा—

[3]सरगैर्हंसमाला ॥

[4]मधुमति ननगाः ॥

कुमारललिता [5]ज्सौ ग् ॥

चूडामणिस्तभगात् ॥

अत्र द्वाभ्यां पञ्चभिश्च यतिमाहुः केचित् । अन्ये तु पादान्त एव । अत्र संख्या १२८ ॥

अथानुष्टुप् (८)—

भौ गिति चित्रपदा गः ॥ १२ ॥

---

१ 'चेत्' इति पाठः. २ एतदनन्तरम् 'स्याद्रौ स्रग्विणी', 'यथौ सोमराजी', 'स्यान्म्सो सोमकुलम्', 'कामलतिका म्यौ', इति सूत्राणि क्वचित्. ३ 'सरगा', 'भरगैः' इति पाठौ. ४ 'ननगि मधुमती' इति पाठः. ५ 'ज्स्गाः' इति पाठः.

भगणौ गुरू च यत्र पादे इत्येवं सा चित्रपदा । पादे यतिः ॥

**मो मो गो गो विद्युन्माला ॥ १३ ॥**

मगणौ द्वौ च गुरू विद्युन्मालेति । चतुर्भिश्चतुर्भिश्च यतिरिति संप्रदायः॥

**माणवकं भात्तलगाः ॥ १४ ॥**

भाद्गणात्तगणलघुगुरवो यदि तदा माणवकम् । 'माणवकाक्रीडितकम्' इति पैङ्गले संज्ञा । पूर्ववद्यतिः ॥

**म्नौ गौ हंसरुतमेतत् ॥ १५ ॥**

मगण-नगणौ गुरू च द्वावेतद्धंसरुतं नाम ॥

**र्जौ समानिका गलौ च ॥ १६ ॥**

रेफ-जकारौ गुरुलघू च समानिका नाम ॥

**प्रमाणिका जरौ लगौ ॥ १७ ॥**

जगणरेफौ लघुगुरू च प्रमाणिका । समान्येव समानिका, प्रमाण्येव प्रमाणिका । स्वार्थे कश्छन्दोऽनुरोधात् ॥

**वितानमाभ्यां यदन्यत् ॥ १८ ॥**

आभ्यां समानीप्रमाणीभ्यामन्यद्यदनुष्टुब्जातीयं छन्दो वितानसंज्ञम् । आभ्यामन्यदित्युक्तं लक्ष्यलक्षणम् । केचित्तु—'समानिकायां गुरुलघुक्रमेण समाप्तिः, प्रमाणिकायां लघुगुरुक्रमेण, विताने तु द्वौ गुरू द्वौ लघू, द्वौ लघू द्वौ गुरू वा, द्वौ गुरू एको लघुः पुनरेको गुरुरिति वा, द्वौ लघू एको गुरुरेको लघुरिति वा, इत्थं वा नियमः' इत्याहुः । तत्र द्वौ गुरू द्वौ लघू इत्यत्रोदाहरणम्—'तृष्णां त्यज धर्मे भज पापे हृदयं मा कुरु । इष्टा यदि लक्ष्मीस्तव शिष्टाननिशं संश्रय ॥' द्वौ लघू द्वौ गुरू इत्यत्रोदाहरणम्—'हृदयं यस्य विशालं गगनाभोगसमानम् । लभतेऽसौ मणिचित्रं नृपतिर्मूर्ध्नि वितानम् ॥' एवमन्यत्राप्युदाहार्यम् । वयं तु गृह्णीम एतदेतेषां वितानतेति न तु नियमम् । अतएवोक्तनियमातिक्रमेणैवोदाहरणं मूले । सूत्रमपि 'वितानमन्यत्' इति सामान्यत एव, न तु नियमं कंचिदाह । वृत्तिकृदपि 'सूत्रकारो वितानस्यानेकप्रकारतां दर्शयति' इति वदन्ननेकमात्रतामाह, न तु नियममिति ॥

तथा—

[२]नाराचिका तरौ लगौ[३] ॥

---

१ एतदनन्तरम् 'कुमारललिता ज्सौ गौ' इति सूत्रं क्वचित्. २ 'नाराचकम्' इति पाठः. ३ एतदनन्तरम् 'जौं जगौ च सिंहलेखा' इति सूत्रं क्वचित्.

अत्र संख्या २५६ ॥

अथ बृहती (९)—

**रान्सावह हलमुखी ॥ १९ ॥**

रगणानन्तरं नगणसगणौ चेदिह छन्दःशास्त्रे हलमुखी नाम । त्रिभि षड्भिश्च यतिरिति संप्रदायः ॥

**भुजगशिशुभृता नौ मः ॥ २० ॥**

द्वाभ्यां नगणाभ्यामेकेन च मगणेन भुजगशिशुभृता । सप्तभिर्द्वाभ्यां च यतिः ॥

तथा—

**भद्रिकेति रनैरियम् ॥**

वृत्तसंख्या ५१२ ॥

अथ पङ्क्तिः (१०)—

**म्सौ ज्गौ शुद्धविराडिदं मतम् ॥ २१ ॥**

मगण-सगणौ जगणगुरू च तच्छुद्धविराण्मतं छन्दोविदाम् । पादान्ते यतिः ॥

**म्नौ गौ चेति पणवनामकम् ॥ २२ ॥**

मगण-सगणौ जगण-गुरू चेति पणवनामकम् । पञ्चभिः पञ्चभिश्च यतिः ॥

**जौं रगौ मयूरसारिणी स्यात् ॥ २३ ॥**

रगण-नगण-रगण-गुरुभिर्मयूरसारिणी । पादान्ते यतिः ॥

**भ्मौ सगयुक्तौ रुक्मवतीयम् ॥ २४ ॥**

भगण-मगणौ सगण-गुरुणा च रुक्मवती । पञ्चकमालेत्यन्ये । पादान्ते यतिः ॥

**ज्ञेयाँ मत्ता मभसगयुक्ता ॥ २५ ॥**

---

१ 'शशिभृता'; 'शिशुसृता'; 'शिशुयुता' इति पाठः. २ 'भद्रिका भवति रो नरौ' इति पाठः. ३ 'म्नौ ग्गौ चेति पणवनामेदम्' इति पाठः. ४ 'चम्पकमाला चेद्भ्मसाद्गुः' इति पाठः. ५ 'चम्पकमाला' इति पाठः. ६ एतत्पूर्वम् 'दीपकमाला चेद्भ्मौ जगौ'; 'ज्ञेया हंसी भमनगयुक्ता' इति सूत्रे क्वचित्.

म-भ-सगण-गुरुयुता मत्ता । चतुर्भिः षड्भिश्च यतिः ॥

**नरजगैर्भवेन्मनोरमा ॥ २६ ॥**

न र-जगण-गुरुभिर्मनोरमा । पादे यतिः ॥

**त्जौ जो गुरुणेयमुपस्थिता ॥ २७ ॥**

त-ज-जगण-गुरुभिरुपस्थिता नाम । पादे यतिः । द्वाभ्यामष्टभिश्चे-त्येके ॥

अत्र संख्या १०२४ ॥

अथ त्रिष्टुप् (११)—

**स्यादिन्द्रवज्रा यदि तौ जगौ गः ॥ २८ ॥**

त-त-जगणगुरुभ्यां चेन्द्रवज्रा नाम । पादे यतिः ॥

**उपेन्द्रवज्रा जतजास्ततो गौ ॥ २९ ॥**

ज-त-जगणा गुरू चोपेन्द्रवज्रा नाम । पूर्वोक्तैव यतिः ॥

**अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ॥ ३० ॥**

अव्यवहितोक्तेन्द्रवज्रोपेन्द्रवज्रालक्षणवन्तौ पादौ यत्संबन्धिनौ ता उपजातयो नाम । अत्र पूर्वोक्तलक्षणपादद्वयेन यथायोगमेकद्विवारवृ-त्त्या निष्पत्तिर्विवक्षिता, न तु द्वाभ्यामेवं वृत्तपूर्तिः पादद्वयमात्रघटि-तस्य वृत्तस्याभावात् । द्विवचनं लक्षणद्वययोगेन लक्षणया नेयम् । ता-श्चतुरक्षरप्रस्तारवत्प्रस्तारे सत्याद्यन्तभेदयोः केवलेन्द्रवज्रोपेन्द्रवज्रा-त्वात्त्यागे चतुर्दश भवन्ति । यथा—इउउउ, उइउउ, इइउउ, इउइउ, उउइउ, उइइउ, इइइउ, उउउइ, इउउइ, उइउइ, इइउइ, उउइइ इउइइ, उइइइ, इति । तथा च वृद्धाः—'एकत्र पादे चरणद्वये वा पादत्रये वा-न्यतरस्थितिश्चेत् । तयोरिहान्यत्र तदोहनीयाश्चतुर्दशोक्ता उपजाति-भेदाः ॥' इति । अत्राद्यभेदोदाहरणम्—'दैत्याधिपप्राणमुषां नखाना-मुपेयुषा भूषणतां क्षतेन । प्रकाशकार्कश्यगुणौ दधानाः स्तनौ तरुण्यः परिवव्रुरेनम् ॥' मूलश्लोकस्तु पृष्ठभेदोदाहरणम् । एवमन्यभेदेष्वप्यु-दाहरणानि काव्येषु च विवेचनीयानि ॥

**इत्थं किलान्यास्वपि मिश्रितासु स्मरन्ति जातिष्विदमेव नाम ॥ ३१ ॥**

---

१ 'पाद' इति पाठः. २ 'वदन्ति' इति पाठः.

अन्यास्वपि जगत्यादिजातिष्वित्थं सामान्यसंख्याक्षरत्वसमानयतिकत्वादिप्रकारेण मिश्रितास्विदमेवोपजातिनाम वृद्धाः स्मरन्ति। ग्रन्थान्तरेभ्यो ज्ञात्वा वदन्तीत्यर्थः। इत्थमित्यनेन विषमवर्णसंख्याज्ञानां विषमयतिकानां च जातीनां त्र्यादीनां च मिश्रणे उपजातिर्नाम नास्तीति सूचितम्। स्मरन्तीत्यनेन च कविप्रयोगे दर्शनानुरोधः सूचितः। तत्रेन्द्रवंशावंशस्थाभ्यामुदाहरणम्—'इत्थं रथाश्वेभनिषादिनां प्रगे गणो नृपाणामथ तोरणाद्बहिः। प्रस्थानकालक्षमवेषकल्पनाकृतक्षणक्षेपमुदैक्षताच्युतम्॥' एवमन्यत्र प्रयोगवशादुदाहरणं ज्ञेयम्। सर्वासामुपजातीनामुक्तया दिशा चतुर्दश भेदा भवन्ति। विषमार्धसमरूपत्वेऽप्युपजातीनां समवृत्तेषूपन्यासः समवृत्तघटिततया प्रासङ्गिकः॥

नजजलगैर्गदिता[1] सुमुखी॥ ३२॥

नजजैर्गणैर्लघुगुरुभ्यां च सुमुखी नाम। पञ्चभिः षड्भिश्च यतिः॥

दोधकवृत्तमिदं भभभाद्गौ॥ ३३॥

भगणत्रयाद्गुरुद्वयं चेद्दोधकं नाम। भभभादिति समाहारद्वन्द्वैकवद्भावः। 'दोधकनामनि भत्रयतो गौ' इति वा पाठः। पादान्ते यतिः॥

शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः॥ ३४॥

म-त-तैर्गुरुभ्यां च शालिनी। अब्धिभिश्चतुर्भिर्लोकैः सप्तभिश्च यतिरिति शेषः। एवमुत्तरत्रापि॥

वातोर्मीयं कथिता म्भौ तगौ गः॥ ३५॥

म-भ-त-गु-गुरुभिर्वातोर्मी। इयमिति शालिन्युक्तयतिमतीत्यर्थः॥

बाणरसैः[2] स्याद्भतनगगैः श्रीः[3]॥ ३६॥

भ-त-न-ग-गुरुभिः पञ्चभिः षड्भिश्च यतौ श्रीर्नाम॥

म्भौ न्लौ गः स्याद्भ्रमरविलसितम्[4]॥ ३७॥

म-भ-न-लघुगुरुभिर्भ्रमरविलसितमिति। चतुर्भिः सप्तभिश्च यतिः॥

रान्नराविह[5] रथोद्धता लगौ॥ ३८॥

र-न-र-ल-गैरिह च्छन्दःशास्त्रे रथोद्धता। पादे यतिः॥

---

१ 'गदिता' इति पाठः. २ 'पञ्चरसैः श्रीर्भतनगगैः स्यात्' इति पाठः ३ एतदनन्तरम् 'सान्द्रपदं भ्तौ गनलघुभिश्च' इति सूत्रं क्वचित्. ४ 'विलसिता' इति पाठः. ५ 'रो नराविह इति पाठः.

स्वागतेति रनभाद्गुरुयुग्मम् ॥ ३९ ॥

र-न-भ-गणेभ्यः परं गुरुयुग्मं यदि तदेत्येवं स्वागता । न-र-भादित्येकवद्भावः पूर्ववद्यतिः ॥

ननसगगुरुरचिता वृत्ता ॥ ४० ॥

न-न-स-ग-गुरुर्वृत्ता नाम चतुर्भिः सप्तभिश्च यतिः ॥

ननरलगुरुभिश्च भद्रिका ॥ ४१ ॥

न-न-र-ल गैर्भद्रिका । पादे यतिः ॥

श्येनिका रजौ रलौ गुरुर्यदा ॥ ४२ ॥

स्पष्टम् । पादे यतिः ॥

मौक्तिकमाला यदि भतनाद्गौ ॥ ४३ ॥

भ-त-नादित्येकवद्भावः । पञ्चसु षट्सु च यतिः ॥

उपस्थितमिदं ज्सौ ताद्गकारौ ॥ ४४ ॥

ज-स-त-ग-गैरुपस्थितम् । पादे यतिः ॥

तथा—

उपचित्रमिदं ससस‍ा लगौ ॥

कुपुरुषजनिता ननौगौं गः ॥

अनवसिता न्यौ भ्गौ गुं षडन्ते ॥

अत्र वृत्तानि २०४८ ॥

अथ जगती (१२)—

चन्द्रवर्त्म निगदन्ति रनभसैः ॥ ४५ ॥

र-न-भ-सैर्गणैश्चन्द्रवर्त्म । चतुर्भिरष्टभिश्च यतिः ॥

जतौ तु वंशस्थमुदीरितं जरौ ॥ ४६ ॥

ज-त-ज-रैर्वंशस्थम् । पादे यतिः ॥

स्यादिन्द्रवंशा ततजैरसंयुतैः ॥ ४७ ॥

---

१ एतदनन्तरम् 'शिखण्डितमिदं ज्सौ त्गौ गुरुश्चेत्' इति सूत्रं क्वचित्. २ 'गुरुरन्ते' इति पाठः. ३ 'गदितं तु' इति पाठः. ४ 'असंयुता' इति पाठः.

त-त-जैरसंयुतै रगणसहितैरिन्द्रवंशा। पादे यतिः॥

इह तोटकमम्बुधिसैः प्रथितम्॥ ४८॥

अम्बुधिसैश्चतुर्भिः सगणैः। पादे यतिः॥

द्रुतविलम्बितमाह नभौ भरौ॥ ४९॥

न-भ-भ-रैर्द्रुतविलम्बितमाहाचार्यः। पूर्वैव पादे यतिः॥

मुनिशरविरतिर्नौ म्यौ पुटोऽयम्[1]॥ ५०॥

मुनिभिः सप्तभिः शरैः पञ्चभिश्च विरतिर्यत्र॥

प्रमुदितवदना भवेन्नौ च रौ॥ ५१॥

स्पष्टम्।

नयसहितौ न्यौ कुसुमविचित्रा[2]॥ ५२॥

स्पष्टम्। द्वयोरपि पादे यतिः॥

रसैर्जसजसा जलोद्धतगतिः॥ ५३॥

रसाश्च रसाश्चेत्येकशेषे षड्भिः षड्भिश्च यतिः॥

चतुर्जगणं वद मौक्तिकदाम॥ ५४॥

भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः॥ ५५॥

रैश्चतुर्भिर्युता स्रग्विणी संमता॥ ५६॥

भुवि भवेन्नभजरैः प्रियंवदा[3]॥ ५७॥

त्रीणि स्पष्टानि। पादे यतिः॥

त्यौ त्यौ मणिमाला च्छिन्ना गुहवक्त्रैः॥ ५८॥

त-य-त-यैर्मणिमाला। गुहस्य स्कन्दस्य वक्त्रैः षड्भिः षड्भिश्च च्छिन्ना यतिमतीत्यर्थः॥

धीरैरभाणि ललिता तभौ जरौ॥ ५९॥

प्रमिताक्षरा सजससैरुदिता॥ ६०॥

एते स्पष्टे। पादे यतिः॥

---

१ 'वसुयुग' इति पाठः। २ एतदनन्तरम् 'भवति तति नजजैरसंयुतैः' इति सूत्रं क्वचित्. ३ एतदनन्तरम् 'जरौ जरौ वद स्वमोचचामरम्' इति सूत्रं क्वचित्.

ननभरसहिता महितोज्ज्वला[1] ॥ ६१ ॥

महिता पूजिता । श्रेष्ठेत्यर्थः । उज्ज्वलेति नाम । पादे यतिः ॥

पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ यौ ॥ ६२ ॥

पञ्चभिरश्वैः सप्तभिच्छिन्ना यतिमती वैश्वदेवी नाम ॥

अब्ध्यष्टाभिर्जलधरमाला[2] भ्मौ स्मौ ॥ ६३ ॥

अब्धिभिश्चतुर्भिरष्टाभिश्च पादयतिः । मगण-भगणौ सगण-मगणौ च भवतः तज्जलधरमाला नाम । चतुर्भिरष्टभिश्छिन्नेत्यनुषङ्गः । पैङ्गले त्वियमेव कान्तोत्पीडा ।

इह नवमालिका[3] नजभयैः स्यात् ॥ ६४ ॥

इह छन्दःशास्त्रेऽष्टाभिश्चतुर्भिश्च यतिरित्याहुर्वृद्धाः ॥

स्वरशरविरतिर्ननौ रौ प्रभा ॥ ६५ ॥

स्वरैः षड्जादिभिः सप्तभिः शरैः पञ्चभिश्च यतिर्यत्र ॥

भवति नजावथ मालती जरौ[4] ॥ ६६ ॥

पञ्चभिः सप्तभिश्च यतिः ॥

जभौ जरौ वदति पञ्चचामरम्[5] ॥ ६७ ॥

अभिनवतामरसं नजजाद्यः ॥ ६८ ॥

स्पष्टम् । इदमेवान्ये ललितपदमाहुः । पादे यतिः ॥

तथा—

नयुगरयुगलं च गौरी मता ॥

पञ्चमुनी भ्मौ सात्सयुता ललना ॥

ललितमभिहितं नौ म्रौ नामतः ॥

द्रुतपदं भवति नभनयाश्चेत् ॥

अत्र वृत्तसंख्या ४०९६ ॥

अथातिजगती (१३)—

तुरगरसयतिर्नौ ततौ गः क्षमा ॥ ६९ ॥

---

१ 'अभिहितोज्ज्वला', 'गदितोज्ज्वला' इति पाठौ. २ 'अब्ध्यङ्गैः स्यात्' इति पाठः. ३ 'नवमालती नजपरौ भ्यौ' इति पाठः. ४ एतदनन्तरम् 'इह वद तामरसं जजजायः' इति सूत्रं क्वचित्. ५ एतदनन्तरम् 'ननररघटिता तु मन्दाकिनी' इति सूत्रं क्वचित्.

न-न-त-त-गुरुभिः क्षमा, सप्तभिः षड्भिश्च तत्र यतिः । चन्द्रिकेत्यन्ते ॥

म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्[1] ॥ ७० ॥

त्रिभिर्दशभिश्च यतिर्यत्र सा ॥

चतुर्ग्रहैरतिरुचिरा[2] जभस्जगाः ॥ ७१ ॥

जभसजगैश्चतुर्षु नवसु च यतावतिरुचिरा ॥

वेदै रन्ध्रैर्म्तौ यसगा मत्तमयूरम् ॥ ७२ ॥

वेदाश्चत्वारो रन्ध्राणि नव ॥

उपस्थितमिदं ज्सौ त्सौ सगुरुकं[3] चेत् ॥ ७३ ॥

सजसा जगौ भवति मञ्जुभाषिणी ॥ ७४ ॥

स्पष्टम्[4] । पञ्चभिरष्टभिश्चात्र यतिः ॥

ननततगुरुभिश्चन्द्रिकाश्वर्तुभिः ॥ ७५ ॥

अश्वाः सप्त, ऋतवः षट् । इयं क्षमैवाचार्यमतभेदेन संज्ञान्तरार्थं पुनरूचे ॥

तथा—

यमौ रौ विख्याता चञ्चरीकावली गः ॥

जभौ स्जगावतिरुचिराम्बुधिग्रहैः ॥

भरतमतेनेयमेव पूर्वमतिरुचिरोक्ता ॥

नसरयुगगैश्चन्द्रलेखर्तुलोकैः ॥

षड्भिः सप्तभिश्च यतिः ॥

ऋतुमुनियति विद्युन्ननौ तौ गुरुः ॥

अत्र वृत्तसंख्या ८१९२ ।

अथ शक्करी (१४)—

म्तौ न्सौ गावक्षग्रहविरतिरसंबाधा ॥ ७६ ॥

---

१ 'प्रहर्षणी' इति पाठः. २ 'चतुर्ग्रहैरिह रुचिरा जभौ सरौ गः'; 'चतुर्ग्रहैरिह रुचिरा जभौ स्जगाः' इति पाठौ. ३ 'यदि गुरुः स्यात्' इति पाठः. ४ एतदनन्तरम् 'जतौ सजौ गो भवति मञ्जुहासिनी', 'नवनन्दिनी सजससैर्गुरुयुक्तैः', 'कुटिलगतिर्नजौ सप्तभिस्तौ गुरू' इति सूत्राणि क्वचित्.

म-त-न-सगणैर्गुरुभ्यां चासंबाधा नाम । अक्षैर्बाह्येन्द्रियैः पञ्चभिः, ग्रहैर्नवभिश्च यतिर्यत्र सा तथा ॥

ननरसलघुगैः स्वरैरपराजिता ॥ ७७ ॥

स्वराश्च स्वराश्चेत्येकशेषे सप्तभिः सप्तभिश्च यतिर्भवति ॥

ननभनल[1]घुगैः प्रहरणक[2]लिता ॥ ७८ ॥

पूर्वोक्तैव यतिः ॥

उक्ता वसन्ततिलका तभजा जगौ गः ॥ ७९ ॥

त-भ-ज-जा गणा गुरू चेति वसन्ततिलका ॥

सिं[3]होन्नतेयमुदिता मुनिकाश्यपेन ॥ ८० ॥

काश्यपेन मुनिनेयं वसन्ततिलकैव सिंहोन्नतोक्तेति संज्ञान्तरोक्तिः ॥

उ[4]द्धर्षिणीयमुदिता मुनिसैतवेन[5] ॥ ८१ ॥

सैतवेन त्वाचार्येणेयमुद्धर्षिणीत्युक्ता ॥

इन्दुवदना भजसनैः सगुरुयुग्मैः ॥ ८२ ॥

गुरुयुगलसहितैर्भ-ज-स-नैः ॥

द्विःसप्तच्छिदलोला म्सौ म्भौ गौ चरणे चेत्[6] ॥ ८३ ॥

द्विर्द्विवारं सप्तसु च्छिद्यतिर्यस्याः सा लोला नाम ॥

तथा—

ननतजगुरुगैः सप्तयतिर्नदी स्यात् ॥

लक्ष्मीरन्तविरामा म्सौ तभौ गुरुयुग्मम् ॥

त्रिननगगिति वसुयति सुपवित्रम् ॥

मध्यक्षामा युगदशविरामा म्भौ न्यौ गौ ॥

---

१ 'लगिति' इति पाठः. २ 'कलिका' इति पाठः. ३ 'सिंहोद्धता' इति पाठः. ४ 'उद्धर्षणीति गदिता किल' इति पाठः. ५ एतदनन्तरम् 'नागेन सैव गदिता मधुमाधवीति'; 'सजसा य्लगाश्च वसुधा सपञ्चग्रहैः' इति सूत्रे क्वचित्. ६ एतदनन्तरम् 'युगदिग्भिः कुटिलमिति मतस्थौ न्यौ गौ'; 'नजभजलग्युता धृतिरियं कथिता'; 'म्भौ न्यौ गौ चेज्जलधिदश च हंसश्येनी'; 'म्भौ न्यौ ल्गौ चेद्भवति जगति चन्द्रौतसः'; 'देवरवरतनु भनननलघुगैः'; 'मस्तोनो मो गौ यदि गदिता वासन्तीयम्'; 'ननततगयुतैः सप्तभिर्वै वसन्तः' इति सूत्राणि क्वचित्.

इदमेव कुटिलमित्यन्ये ॥
नजभजला गुरुश्च भवति प्रमदा ॥
सजसा यलौ गिति शरग्रहैर्मञ्जरी ॥
नजभजगैर्गुरुश्च वसुषट्ट् कुमारी ॥
नरनैर्लगौ च रचितं सुकेशरम् ॥
अत्र वृत्तसंख्या १६३८४ ॥
अथातिशक्करी (१५)—

द्विहतहयलघुरथ गिति शशिकला ॥ ८४ ॥

द्विगुणिता हयाः सप्त लघवो यत्र सा तथा । अथ तदनन्तरं गुरुर्गुर्विताश्चतुर्दश लघवः शशिकलेत्यर्थः । इयमेव पैङ्गले ननननसैश्चन्द्रावर्ता नामोक्ता । अत्र सप्तभिरष्टभिश्च यतिरिति संप्रदायः ॥

स्रगिति भवति रसनवकयतिरियम् ॥ ८५ ॥

इयं शशिकलेव रसेषु षट्सु नवसु यतौ स्रगिति संज्ञिता मालेत्यर्थः॥

वसुहययतिरिह मणिगुणनिकरः ॥ ८६ ॥

अष्टसु सप्तसु च यतावियमेव शशिकला मणिगुणनिकरसंज्ञितेति । यतिभेदेन संज्ञान्तरद्वयमुक्तम् ॥

ननमयययुतेयं मालिनी भोगिलोकैः ॥ ८७ ॥

भोगिभिर्नागैरष्टभिर्लोकैर्भूरादिभिः सप्तभिर्यताविति शेषः । 'नागलोकैः' इति रुचिरः पाठः ॥

भवति नजौ भजौ रसहितौ प्रभद्रकम् ॥ ८८ ॥

रसहितौ रगणयुक्तौ । सप्तस्वष्टसु च यतिः ॥

सजना नयौ शरदशैर्यतिरियमेला ॥ ८९ ॥

शरेषु पञ्चसु दशसु च यतौ सजननयैरेला नाम ॥

म्रौ म्यौ यान्तौ भवेतां सप्ताष्टभिश्चन्द्रलेखा ॥ ९० ॥

यान्तौ यगणयुक्तौ ॥
तथा—
मा बाणास्युर्यस्यां सा कामक्रीडासंज्ञा ज्ञेया ॥

---

१. 'कविः' इति पाठः. २. 'संज्ञातव्या' इति पाठः.

नजभजरैर्विराजितमिदं सुकेसरम्[1] ॥
चन्द्रलेखाभिधा रौ म्यौ यो विरामः स्वराष्टौ[2] ॥
ननतभरकृताङ्गैः स्वरैरुपमालिनी ॥
अत्र वृत्तानि ३२७६८ ॥
अथाष्टिः(१६)—

भ्रत्रिनगैः स्वरात्खमृषभगजविलसितम् ॥ ९१ ॥

भ्रौ च त्रयो नाश्च गुरुश्च तैर्विग्रहः, स्वरात्सप्तमात्परं खं विरामो यदि तदेति शेषः । सप्तसु यतिः । पादान्ते यतिः प्राप्तैवेति सा नोक्ता । स्वरात्परं खं शरीरच्छिद्रं नवकं यतिस्थानमिति शेष इति वार्थः । ऋषभेत्यादि सर्वं नाम ॥

नजभजरैः सदा भवति वाणिनी गयुक्तैः ॥ ९२ ॥

गयुक्तैर्गुरुयुक्तैः ॥
तथा—
चित्रसंज्ञमीरितं रजौ रजौ रगौ च वृत्तम् ॥
जरौ जरौ ततो जगौ च पञ्चचामरं वदेत्[3] ॥
संकथितां भरौ नरनगाश्च धीरललिता ॥
पञ्चभकारयुताश्वगतिर्यदि चान्त्यगुरुः ॥
अत्र संख्या ६५५३६ ॥
अथात्यष्टिः (१७)—

रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी ॥ ९३ ॥

रसैः षड्भी रुद्रैरेकादशभिश्छिन्ना यतिमती ॥

जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः ॥ ९४ ॥

वसुभिरष्टभिर्ग्रहैर्नवभिश्च यतिमती ॥

दिङ्मुनि वंशपत्रपतितं भरनभनलगैः ॥ ९५ ॥

---

१ 'सुखेलकम्' इति पाठः. २ 'चन्द्रकान्ता' इति पाठः. एतत्पूर्वम् 'भवतः सजौ ससयुता वृषभस्ततो यः' इति सूत्रं क्वचित्. ३ एतदनन्तरम् 'रान्नभद्वितयैरुदितं रमणीयकम्' इति सूत्रं क्वचित्. ४ एतत्पूर्वम् 'नजरभभेन गेन च स्यान्मणिकल्पलता' इति सूत्रं क्वचित्. ५ 'कृताश्व' इति पाठः. ६ एतदनन्तरम् 'जरौ जरौ जगाविदं वदन्ति पञ्चचामरम्' इति सूत्रं क्वचित्.

दिशो दश, मुनयः सप्त । दिशो मुनयश्चेति समाहारे छन्दोविशेषणं यतिस्थाने, न च तत्संख्याकाक्षररूपता विवक्षिता दिङ्मुनिभिर्वंशपत्रपतितमिति । एकं वा पदं यतिपदस्य मध्यमस्य लोपेन वा समासः । तत्र यतिस्थानमिति वाध्याहारः । दिङ्मुनियतीति पदेऽन्त्यपदलोप इति केचित् । लुप्तविभक्त्यन्तमित्यन्ये । तदुभयं चिन्त्यम् ॥

रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा ॥ ९६ ॥

षट्सु चतुर्षु सप्तसु च त्रिषु स्थानेषु यतौ हरिणी नाम ॥

मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत् ॥ ९७ ॥

मभनततगगैर्मन्दाक्रान्ता जलधिषडगैश्चतुर्भिः षड्भिरगैः पर्वतैः सप्तभिः ॥

हयदशभिर्नजौ भजजला गुरु नर्कुटकम् ॥ ९८ ॥[1][2]

सप्तभिर्दशभिश्च यतिः ॥

मुनिगुहकार्णवैः कृतयति वद कोकिलकम् ॥ ९९ ॥[3]

मुनयः सप्त, गुहस्य स्कन्दस्य कानि मुखानि षट्, अर्णवाश्चत्वारस्तैः कृता यतिर्यत्र तन्नर्कुटकमेव कोकिलकं वद ब्रूहीति शिष्योपदेशः । यतिभेदेन तस्यैवान्या संज्ञेति ॥

तथा—

रसयुगहययुङ्नौ म्रौ सो लगौ हि यदा हरिः ॥

भवेत्कान्ता युगरसहयैर्यभौ नरसा लगौ ॥

ससजा भजगा गु दिक्स्वरैर्भवति चित्रलेखा ॥

अत्र वृत्तसंख्या १३१०७२ ॥

अथ धृतिः (१८)—

स्याद्भूतर्त्वश्वैः कुसुमितलतावेल्लिता म्तौ नयौ यौ[4] ॥ १०० ॥

भूतानि पञ्च, ऋतवः षट्, अश्वाः सप्त ॥

---

१ 'यदि भवतो नजौ भजजला गुरुर्मर्कटकम्' इति पाठः. २ 'नर्दटकम्' इति पाठः. ३ एतदनन्तरम् 'ससजैरतिशायिनी मता भजपरैर्गुरुभ्याम्' इति सूत्रं क्वचित्. ४ एतदनन्तरम् 'दशवसुविरतिर्ननौ रैश्चतुर्भिर्युता सालसा' । 'अधिकं दर्शयति ननौ रौ भवेतां ररौ तारका'; 'स्याद्भूतर्त्वश्वैर्मौ भ्मौ विरतिश्चेत्सिंहविस्फूर्जितं यौ'; 'सौ जौ भरसंयुतौ करिवाणखं हरनर्तनम्' इति सूत्राणि क्वचित्.

तथा—
मात्सो जौ भरसंयुतौ करि(८)बाण(५)कै(५)र्हरिणप्लुतम् ॥
यदिह नयुगलं ततो वेदरेफैर्महामालिका ॥
पञ्चभकारकृताश्वगतिर्यदि चान्तसरचिता ॥
सुधा तर्कैस्तर्कैर्भवति ऋतुभिर्यौ मो नसतसाः ॥
तर्काः षट् ॥
वर्णाश्वैर्मननततमकैः कीर्तिता चित्रलेखेयम् ॥
वर्णाश्चत्वारः ॥
भाद्रननानसौ भ्रमरपदकमिदमभिहितम् ॥
शार्दूलं वद मासषट्कयति मः सौ जसौ रो मश्चेत् ॥
मासा द्वादश ॥
अर्था चाश्वैर्मभनयरयुगैर्वृत्तं मतं केशरम् ॥
अर्थाश्चत्वारः ॥
म्भौ न्जौ भ्रौ चेच्चलमिदमुदितं युगैर्मुनिभिः स्वरैः ॥
अत्र वृत्तानि २६२१४४ ॥
अथातिधृतिः (१९)—
सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् ॥ १०१ ॥
द्वादशभिः सप्तभिश्च यतिः ॥
तथा—
नयुगललगुरु निरन्तरं यदा स पञ्चचामरः[1] ॥
रसर्त्वश्वै र्म्यौ न्सौ ररगुरुयुता मेघविस्फूर्जिता[2] स्यात् ॥
भूताश्वाश्वान्तं मतनसररगैः कीर्तितं पुष्पदाम ॥
वृत्तं विम्बाख्यं शरमुनितुरगैर्म्तौ न्सौ ततौ चेद्गुरुः ॥
इयं छाया ख्याता ऋतुरसहयैर्यौ मनसा भ्तौ गुरुः ॥
रसैः षड्भिर्लोकैर्यमनसजजा गुरुर्मकरन्दिका ॥
युगाश्वैः स्याद्यभनयजजगाः कीर्तिता मणिमञ्जरी ॥
गजाब्धितुरगैर्जसौ जसतभा गश्चेत्समुद्रतता ॥

---

१ एतदनन्तरम् 'नजभयसा जगौ च रचना शूलिककुद्भिरत्र सा,' 'भौं जतौ तौ सगुरुकौ यदा दिग्ग्रहच्छेदभाग्भवति' इति सूत्रे क्वचित्. २ 'इना' इति पाठः.

अत्र वृत्तानि ५२४२८८ ॥

अथ कृतिः (२०)—

ज्ञेयाः सप्ताश्वषड्भिर्मरभनययुता भ्लौ गः सुवदना ॥ १०२ ॥

सप्तभिः सप्तभिः षड्भिश्च यतिः ॥

त्री रजौ गलौ भवेदिहेदृशेन लक्षणेन वृत्तनाम[1] ॥ १०३ ॥

त्रिवारं रगणजगणौ गुरुलघू चेदेतादृशेन लक्षणेन वृत्तं नाम गुरुलघुक्रमेणेत्यर्थः । अत्र पादान्ते यतिः । 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति त्रिरित्यत्र दीर्घः ॥

तथा—

रसैरश्वैरश्वैर्यमननततगैर्गैर्न शोभेयमुक्ता ॥

अत्र संख्या १०४८५७६ ॥

अथ प्रकृतिः (२१)—

म्रौ[2] भ्नौ यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्[3] १०४

मरभनैर्यगणत्रयेण च स्रग्धरा त्रिवारं मुनिषु यतियुक्ता सप्तसु सप्तसु सप्तसु यतिमतीत्यर्थः ॥

तथा—

सलिलनिधिर्भवेदिह नजौ भगणो जगणास्त्रयश्च रः ॥

अन्येषां मते सिद्धकमिति संज्ञितमेतत् ॥

अत्र संख्या २०९७१५२ ॥

अथाकृतिः (२२)—

भ्रौ नरना रनावथ गुरुर्दिगर्कविरमं हि भद्रकमिति[4][5] ॥ १०५ ॥

दिक्षु दशस्वर्केषु द्वादशसु च विरमो विरतिर्यस्य तत्तथा प्रसिद्धम् ॥

तथा—

सप्तभकारकृतावसितौ सगुरुः कविभिः कथिता मदिरा ॥

अत्र वृत्तानि ४१९४३०४ ॥

---

१ एतदनन्तरम् 'ख्याता पूर्वः सुवंशा यदि मरभनास्तद्वयं गो गुरुश्च' इति सूत्रं क्वचित्. २ 'म्रभ्नैर्यानां' इति पाठः. ३ एतदनन्तरम् 'भवति नजौ हि सिद्धिरिति भाज्जजा यदि रो भविता' इति सूत्रं क्वचित्. ४ 'इदम्' इति पाठः. ५ एतदनन्तरम् 'ललितं भुजगेन्द्रेण भाषितमेतच्चेन्मसरस्तजनगुभिः'; 'सजता नसौ ररौ गः फणितुरगहयैः स्यान्महास्रग्धराख्या' इति सूत्रे क्वचित्.

अथ विकृतिः (२३)—

यदिह नजौ भजौ भजभलगास्तदश्वललितं हरार्कयतिमत् ॥१०६॥

हराः ११, अर्काः १२ ॥

मत्ताक्रीडा[1] मो तौ नौ नैल्गिति[2] भवति वसुशरदशयतियुता[3] ॥ १०७ ॥

वसवोऽष्टौ पञ्चदश च तेषु यतिमती । अष्टमे पञ्चदश इति च वर्णे यतिः कार्येत्यर्थः । न तु पञ्चसु दशसु चेत्यर्थः । 'मत्ताक्रीडा मौ तौ नौ न्लौग् वसुपञ्चदशकौ' इति सूत्रे द्विवचननिर्देशात् । अन्यथा हि बहुवचनं स्यात् । अन्यैस्तु वाजिवाहनमेतदुक्तम् ॥

अत्र संख्या ८३८८६०८ ॥

अथ संकृतिः (२४)—

भूतमुनीनैर्यतिरिह भतनाः स्भौ भनयाश्च यदि भवति तन्वी ॥ १०८ ॥

भूतानि पञ्च, मुनयः सप्त, इनाः सूर्या द्वादश । अत्र पैङ्गले द्वादशसु च यतिरुक्ता ॥

अत्र संख्या १६६७७२१६ ॥

अथातिकृतिः[4] (२५)—

क्रौञ्चपदा भ्मौ स्भौ ननना[5] न्गाविषुशरवसुमुनिविरतिरिह भवेत् ॥ १०९ ॥

इषवः पञ्च, शराः पञ्च, वसवोऽष्टौ, मुनयः सप्त । एतेषु विरतिर्यस्याः सा ॥

अत्र संख्या ३३५५४४३२ ॥

अथोत्कृतिः (२६)—

वस्वीशाश्वच्छेदोपेतं ममतनयुगनरसलगैर्भुजङ्गविजृम्भितम् ॥ ११०

वसवः ८, ईशाः ११, अश्वाः ७ । एतैश्छेदेन यत्या युक्तम् ॥

---

१ 'मत्ताक्रीडं' इति पाठः. २ 'न्लौ गिति' इति पाठः. ३ 'युतम्' इति पाठः. ४ 'अभिकृति' इति पाठः. ५ 'नननन्गाः' इति पाठः.

मो नाः षट् सगगिति यदि नवरसरसशरयतियुतमपवाहाख्यम् ॥ १११ ॥

मो मगणः, षड् नाः नगणाः सगणाः गो गुरुः पुनर्गुरुश्च नवभिः षड्भिः पुनः षड्भिः पञ्चभिश्च यत्या युतमपवाहाख्यकम् ॥

अत्र वृत्त संख्या ६७१०८८६४ ॥

इति श्रीनारायणभट्टविरचितायां वृत्तरत्नाकरटीकायामुक्तादिप्रकरणम् ॥

इदानीं समवृत्तसङ्गेन समवृत्तरूपान्दण्डकानाह—

यदिह नयुगलं ततः सप्तरेफास्तदा चण्डवृष्टिप्रपातो भवेद्दण्डकः ॥ ११२ ॥

यदीति यदेत्यर्थेऽव्ययम् । हेति प्रसिद्धार्थेऽव्ययं वा । नयुगलं नगणद्वयं ततस्तदनन्तरं सप्त रगणाः स चण्डवृष्टिप्रपातो नाम दण्डकः । इदमेवोदाहरणं पादे । इयं च संज्ञा रातमाण्डव्यव्यतिरिक्तपिङ्गलादिमते । न ताभ्यां त्वेतस्य संज्ञान्तरमकारि ॥

प्रतिचरणविवृद्धरेफाः स्युरर्णार्णवव्यालजीमूतलीलाकरोद्दामसंख्यादयः ॥ ११३ ॥

यद्यपि प्रतिचरणं विवृद्धो रेफो रगणो येषु ते तथेति व्युत्पत्त्या प्रथमे पादे नौ ततोऽष्टौ रेफाः, द्वितीये नव, तृतीये दश, चतुर्थे एकादशेति वृद्धिरित्यर्थः प्रतीयते, तथापि ग्रन्थान्तरविरोधात्प्रतिदण्डकं चरणेषु विवृद्धा रेफा यस्येति विग्रहेणोत्तरदण्डकेषु चरणचतुष्टयेऽप्येकैकरेफ इत्यर्थाश्रयणेन ग्रन्थान्तराविरोधः कार्यः । ततश्च नाभ्यां रगणाष्टकेन च घटितपादोऽर्णाख्यो दण्डकः, रगणनवकेनार्णवः, दशभिर्व्यालः, एकादशभिर्जीमूतः, द्वादशभिर्लीलाकरः, त्रयोदशभिरुद्दामः, चतुर्दशभिः शङ्खः । सर्वत्रादौ नगणद्वयं कार्यम् । आदिशब्दात्पञ्चदशादिरारामसङ्ग्राम-सुराम-वैकुण्ठ-सोत्कण्ठ-सार-कासार-विस्तार-संहार-नीहार-मन्दार-केदार-साधार-सत्कार-संस्कार-माकन्द-गोविन्द-सानन्द-संदोह-नन्देत्येवमादिनामका एकैकरगणवृद्ध्या नद्वयोत्तरैकत्रिंशदधिकशतत्रयरगणघटितैकोनसहस्राक्षरपादपर्यन्तं कविप्रयोगानुसारेण द-

१ एतत्पूर्वम् 'यत्किंचिद्दृश्यते छन्दः षड्विंशत्यक्षराधिकम् । शेषजात्यादिकं मुक्त्वा न सर्वं दण्डजातिमत् ॥' इत्यधिकं क्वचित्. २ 'प्रयातो' इति पाठः. ३ 'शङ्खादयः' इति पाठः.

ण्डका ज्ञेयाः । यदाहुः—'एकोनसहस्राक्षरपर्यन्ता दण्डकाङ्घ्रयः प्रोक्ताः। वर्णत्रिकगणवृद्ध्या नद्वितयाद्या महामतिभिः ॥' इति । तथा च रगणघटितदण्डकाः पञ्चविंशत्यधिकशतत्रय(३२५)संख्याका भवन्ति । एवं यगणादिघटितदण्डका अपि । तत्र रीतिप्रदर्शनायोदाहरणं ममैव यथा—'त्रिभुवसुखहेतवे धातृमुख्यामरप्रार्थनासार्थनावर्षिचिन्तामणे, दशरथकृतयागसौभाग्यतस्तत्तनूजन्मतास्थापितश्रौतमार्गार्गल । मुनिवनगतताटकाकण्टकीमूलकुद्दालितस्वीयबाणावले राघव, कुशिकयजनसिद्धये व्योम कृत्वा शरैश्चण्डवृष्टिं प्रयासि प्रहन्तुं रिपून् ॥' एवमर्णादिष्वप्युदाहार्यम् ॥

प्रचितकसमभिधो धीरधीभिः स्मृतो दण्डको नद्वयादुत्तरैः सप्तभिर्यैः ॥ ११४ ॥

नगणद्वयादुत्तरभाविभिः सप्तभिर्यगणैर्धीरबुद्धिभिः कविभिः प्रचितकसंज्ञको दण्डक उक्तः । प्रचितक इति समभिधा नाम यस्येति विग्रहः । अत्रापि पूर्ववदेकैकयगणवृद्ध्या दण्डकाः कार्याः । यैरित्युपलक्षणम् । अष्टभिरपि गणैः कविप्रयोगानुरोधाद्भोगावलीबिरुदावल्यादिषु दण्डकानामिष्टत्वात् । यद्यपि 'शेषः प्रचितः' इति सूत्रं वृत्तिकृता रेफाष्टकादिरचितदण्डकपरं शेषशब्दमङ्गीकृत्य रगणघटितानामेव चण्डवृष्टिप्रपातोर्ध्वभाविनां प्रचित इति समापनसंज्ञाभिधानार्थतया व्याख्यातम् । अत एव चाह सः—'प्रथमकथितदण्डकश्चण्डवृष्टिप्रपाताभिधानो मुनेः पिङ्गलाचार्यनाम्नो मतः, प्रचित इति ततः परं दण्डकानामियं जातिरेकैकरेफाभिवृद्ध्या यथेष्टं भवेत् । स्वरुचिरचितसंज्ञया तद्विशेषैरशेषैः पुनः काममन्येऽपि कुर्वन्तु वागीश्वराः, भवति यदि समानसंख्याक्षरैर्यत्र पादव्यवस्था ततो दण्डकः पूज्यतेऽसौ जनैः ॥' इति । तथापि यगणादिदण्डकानामपि कविप्रयुक्तत्वादुक्तरगणरचितदण्डकव्यतिरिक्तयादशकृतदण्डकानामेव शेषशब्दोद्दिष्टानामपि तत्संज्ञाज्ञापनार्थतां सूत्रस्याभिप्रेत्य व्याख्या । अत्र तत्कृतव्याख्यामनुसरत एव ममादिकोदाहरणेऽप्यदोषः । सर्वेषु दण्डकेषु पादान्ते यतिः । भूमिसौकर्येण वाग्रेऽपि दण्डका अन्यैरुक्ताः ।

यथा—

नयुगलगुरुयुगेवं यकाराः कवीच्छानुरोधात्तदा यत्र वक्ष्यन्त एषोऽपरो दण्डकः पण्डितैरीरितः सिंहविक्रान्तनामा ॥

यत्र रेफान्कविः स्वेच्छया पाठसौभाग्यसापेक्षयारोपयत्येष धीरैः स्मृतो दण्डको मत्तमातङ्गलीलाकरः ॥

लघुगुरुक्रमेण यत्र वध्यते सुधीभिरिच्छया स दण्डकस्त्वनङ्गशेखरः स्मृतः ॥

स्वेच्छया रजौ क्रमेण संनिवेशयत्युदारधीः कविः स दण्डकः स्मृतो जगत्यशोकमञ्जरी ॥

सगणः सकलः खलु यत्र भवेत्तमिह प्रवदन्ति बुधाः कुसुमस्तवकम् ॥

यकारैः कवीच्छानुरोधान्निबद्धैः प्रसिद्धो विशुद्धोऽपरो दण्डकः सिंहविक्रान्तनामा ॥

एवं मेघमालाकुसुमस्तरणोत्तरकामबाणादयो दण्डकाः षड्विंशत्यक्षराधिकाक्षरपदाः कविप्रयोगानुसारेण ज्ञेयाः । षड्विंशत्यक्षरन्यूनतायां तु पूर्वोक्तासु जातिष्वेवान्तर्भावो यथायोगं भवति ॥

इति श्रीमद्भट्टरामेश्वरसूरिसूनुनारायणभट्टविरचितायां वृत्तरत्नाकरटीकायां समवृत्ताध्यायस्तृतीयः ॥

एवं समवृत्तान्यभिधायाधुना अर्धसमान्याह—

विषमे यदि सौ सलगा दले भौ युजि भाद्गुरुकावुपचित्रम् ॥१॥

विषमे दले प्रथमे तृतीये च पादे सौ सगणद्वयं सलगाश्च सगणलघुगुरवः, युजि समे द्वितीये चतुर्थे च पादे भौ भगणौ पुनर्भगणस्ततो द्वौ गुरू तदोपचित्रं नाम । अर्धसमत्वाद्द्वितीयार्धमप्येवमेवोदाहार्यम् । एवमन्येऽपि ॥

भत्रयमोजगतं गुरुणी चेद्युजि च नजौ ज्ययुतौ द्रुतमध्या ॥ २॥

ओजगतं विषमपादगतं भगणत्रयं च गुरुणी चेद्द्वे अक्षरे, युजि समपादे जयपरौ नगणजगणौ चेत्सा द्रुतमध्येति नाम । उपचित्रापातलिकापरान्तिकेयम् । अत्रापरान्तिकासंनिवेशो भ्रान्तः ॥

सयुगात्सगुरू विषमे चेद्भाविह वेगवती युजि भाद्गौ ॥ ३ ॥

विषमे पादे सत्रयं गुरुश्च, युजि समे पादे भगणत्रयं गुरू च, इह छन्दःशास्त्रे वेगवती नाम, आपातलिकैवेयम् ॥

---

१ 'विक्रीड' इति पाठः.

ओजे तपरौ जरौ गुरुश्चेन्म्सौ ज्गौग्भद्रविराड् भवेदनोजे ॥ ४॥

ओजे विषमे पादे तगणात्परौ जगणरगणौ गुरुश्च, अनोजे विषमे मसजगगुरवश्च भद्रविराड्भवेत् । औपच्छन्दसिकस्यैवेयं गणनिवेशविशेषे संज्ञा ॥

असमे सजौ सगुरुयुक्तौ केतुमती समे भरनगाद्गः ॥ ५ ॥

विषमे दले पादे सजसा गणा गुरुश्च, समे भरना गणा गुरू च केतुमती नाम । भरनगादिति समाहारैकवचनम् ॥

[1]आख्यानकी तौ जगुरू [2]गे ओजे जतावनोजे जगरू गुरुश्चेत् ॥६॥

तौ गणौ जगणगुरू गुरुश्चौजे विषमे पादे अनोजे समे पादे जतजगगुरवस्तदाख्यानकी नाम ॥

जतौ जगौ गो विषमे समे चे[3]त्तौ ज्गौ [4]गँ एषा विपरीतपूर्वा ॥७॥

विषमे जतजगगुरवः, समे ततजगगुरवस्तदैषा आख्यानकी विपरीतशब्दपूर्वा । विपरीताख्यानकीत्यर्थः । अनयोरुपजात्यन्तर्भावेऽपि विशेषसंज्ञाविधानार्थमर्धसमाध्याये पाठः ॥

सयुगात्सलघू विषमे गुरुर्युजि नभौ [5]भरकौ हरिणप्लुता ॥८॥

सगणद्वयात्सगणलघू गुरुश्च विषमपादे, युजि समे पादे नभभरा गणा हरिणप्लुता नाम ॥

अयुजि ननरला गुरुः समे [6]जमपरवक्त्रमिदं ततो जरौ ॥ ९॥

विषमे ननरलगुरवः, समे नजजरा अपरवक्त्रं नाम । अस्य वैतालीयान्तर्गतत्वेऽपि संज्ञान्तरविधानार्थमत्रोक्तिः ॥

अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा[7]॥

विषमे नयुगलरेफयकाराः, युजि समे नजजरगुरवस्तदा पुष्पिताग्रा नाम । इयमप्यौपच्छन्दसिकान्तर्भूतैव विशेषसंज्ञार्थमिहोक्ता ॥

वदन्त्यपरवक्त्राख्यं वैतालीयं विपश्चितः ।
पुष्पिताग्राभिधं केचिदौपच्छन्दसिकं तथा ॥ ११ ॥

---

१ 'आख्यातिकी' इति पाठः. २ 'गम्' इति पाठः. ३ 'स्यात्' इति पाठः. ४ 'गम्' इति पाठः. ५ 'च भरौ' इति पाठः. ६ 'तदपरवक्त्रमिदं नजौ जरौ' इति पाठः. ७ 'एतदनन्तरम् 'विषमे यदि सौ जगौ समे स्तरलगोऽपरवक्त्रमीरितम्' इति सूत्रं क्वचित्.

विपश्चितः पण्डिता अपरवक्त्राख्यं वैतालीयमेव वदन्ति । पुष्पिताग्राभिधं छन्द औपच्छन्दसिकमेव केचिदाहुः । इदं स्वस्यापि संमतम् । भावस्तूक्त एव ॥

स्यादयुग्मके रजौ रयौ[1] समे चेज्जरौ चरौ गुरुर्यवात्परा मतीयम्[2]॥

विषमपादे रजरयाः, समे जरजरगाः, यवाद्यवशब्दात्परा मती । यवमतीत्यर्थः ।

तथा—

सौ लगौ विषमे यदि, सजजा गुरुर्ललिता समे ॥

ओजपरौ भरौ जरौ गुरू समे जौ यौ, कीर्तिता वुधैरियं तु षट्पदाख्या ॥

रो जरौ जसंयुतौ पदे पदेऽथ, युग्मे तरौ जरौ गुरुर्भृंगी यवानी ॥

अयुजि ननभभाः समकेऽपि तु, नयुगरयुगलं तदा कौमुदी ॥

यदि विषमे भवतो नजौ जरौ, सजया समे जगुरू मञ्जुसौरभम् ॥

तथाष्टाविंशतिर्लघव एको गुरुरिति विषमः पादः, त्रिंशल्लघव एको गुरुश्चेति समः सा शिखान्ता । इयमेव विपर्यस्तपादा खञ्जा नाम । एते द्वे अपि द्विखण्डकप्रकरणोक्तशिखाखञ्जयोश्छन्दसोः षष्ट्यक्षरतामङ्गीकृत्य यथाश्रुतव्याख्याने तदतिरिक्ते अत्र ज्ञेये । यदा त्वसदुक्तप्रकारेण तत्र सकलशब्दं पादपरमाश्रित्य व्याख्यायते तत्रैवैतयोरुक्तत्वान्नात्र वक्तव्यता भवति ॥

इति श्रीमद्भट्टरामेश्वरसूरिसूनुनारायणभट्टविरचितायां वृत्तरत्नाकरव्याख्यायामर्धसमाध्यायश्चतुर्थः ॥

---

अर्धसमान्यत्राभिधायोद्देशक्रममनुसृत्य विषमवृत्तानि लक्षयति—

मुखपादोऽष्टभिर्वर्णैः, परे स्युर्मकरालयैः[3] क्रमाद्वृद्धैः[4] ।
सततं यस्य विचित्रैः पादैः संपन्नसौन्दर्यम् ।
तदुदितममलमतिभिः[5] पदचतुरूर्ध्वाभिधं वृत्तम् ॥ १ ॥

---

१ 'रजौ समे तु जरौ जरौ' इति पाठः. २ एतदनन्तरम् 'विषमे ससजा गुरू अनोजे सभरायश्च तु मालभारिणीयम्', 'विषमे ससजा गुरू अनोजे स्भरयाश्छन्दसिकं तदौपपूर्वम्' इति सूत्रे क्वचित्. ३ 'अस्मात्'. इति पाठः. ४ 'वृद्ध्या' इति पाठः. ५ 'तदभिहितममलधीभिः' इति पाठः.

यस्य वृत्तस्य मुखपादोऽग्रपादो वर्णाष्टकेन, परे द्वितीयायाः पादा मकरालयैः समुद्रैश्चतुर्भिरक्षरैः क्रमाद्वृद्धैः सततं नैरन्तर्येण स्युस्तद्वृत्तं निर्मलबुद्धिभिः पिङ्गलादिभिः पदचतुरूर्ध्वाभिधमुदितमुक्तम् । किंविशिष्टम् । विचित्रैर्विलक्षणैः पादैर्जातं सौन्दर्यं यस्य तादृशम् । अत्र वर्णैरिति संपन्नसौन्दर्यमिति च वदता गुरुलघुनिवेशनियमो नास्ति। किंतु श्रोतृश्रोत्रसौभाग्यार्थं वर्णवैचित्र्यं विधेयमिति सूचितम् । प्रथमपादोऽष्टाक्षरः, द्वितीयो द्वादशाक्षरः, तृतीयः षोडशाक्षरः, चतुर्थो विंशत्यक्षरः कार्य इति फलितोऽर्थः । अत्र चैकद्वित्रिचतुष्कानां परस्परताडनया पादानां परस्परसंकरे शङ्खचक्रगदापद्मानां परस्परसंकरे केशरचनाया इव चतुर्विंशतिर्भेदा भवन्ति। तत्प्रस्तारतो यथा—

८.१२.१६.२०, ८.१६.१२.२०, ८.२०.१६.१२, ८.१२.२०.१६, ८.१६.२०.१२, ८.२०.१२.१६, १२.८.१६.२०, १२.१६.८.२०, १२.२०.१६.८, १२.८.२०.१६, १२.१६.२०.८, १२.२०.८.१६, १६.१२.८.२०, १६.८.१२.२०, १६.२०.८.१२, १६.१२.२०.८, १६.८.२०.१२, १६.२०.१२.८, २०.१२.१६.८. २०.८.१६.१२, २०.१२.८.१६, २०.१६.८.१२, २०.१६.१२.८, २०.८.१२.१६, ॥

अत्रैकैकपङ्क्तिस्थितकोष्ठकचतुष्टयस्थिताङ्कसमानाक्षरक्रमिकपादैरेकैको भेदो ज्ञेयः । तत्र प्रथमभेदे मूलस्थितमुदाहरणम् । द्वितीये तु ममैव यथा—'लोभं लम्भय विलयं (८) लाभालाभावुभौ भावय समानौ भव धीरः (१६) । यत्नाद्गुरुजनगौरवमाचर (१२) यदि तवास्मिन्नमुष्मिंश्च लोके यशोविशालमाशास्यं स्यात् (२०) ॥' इदमेवोदाहरणं पादव्यत्ययेनेतरेषु द्वाविंशतिभेदेषु योज्यम् ॥

एतस्यैव प्रतिपादान्ते गुरुद्वयनियमे संज्ञान्तरमाहुः—

प्रथममुदितवृत्ते विरचितविषमचरणभाजि ।
गुरुकयुगलनिधन[1] इह संहित आङा लघुविरचितपदविहृतियतिरिति[2] भवति पीडः[3] ॥ २ ॥

विरचितान्विषमान्विषमसंख्याकाक्षरांश्चरणान्भजति, एवंभूते प्रथमोक्ते पदचतुरूर्ध्वाभिधे वृत्ते इति सर्वोऽनुवादः, गुरुयुग्मं निधने यस्य तादृशे सति । स्वार्थे कः, इतीत्थंप्रकार आङा उपसर्गेण सहितः

---

१ 'युगलक' इति पाठः. २ 'कलित आङ्घ्रितरुचिरपद' इति पाठः. ३ 'रचन' इति पाठः.

पीडः आपीडो भवतीत्यर्थः । कीदृक् । लघुकृतपदरचनया यतिर्यस्मिन्, अन्ते गुरुद्वयस्य नियतत्वादितरभागे लघुविरचितत्वं श्रुतिसुखकरी च लघुपादयतिः कार्येति सूचनाय यतिग्रहणम् । विशिष्टानुवादश्चाष्टा-द्यक्षरेष्वेव पादेष्वन्ते गुरुद्वयं कार्यम्, न तु ततोऽतिरिक्तमिति सूच-नार्थः । आपीड इति संज्ञामात्रछन्दस्य प्रवेशादाङा सहित इत्युक्ति-रीतिः । पूर्वोक्तरीत्यापीडेऽपि चतुर्विंशतिप्रकारो भेदः । प्रथमभेदोदा-हरणमिदम् । आपीड एव सप्तमाष्टमैकादशान्भेदान्व्युत्पादनाय व्यु-त्पादयति । प्रथमे त्रिभिः ॥

प्रथममितर[1]चरणसमुत्थं, श्रयति से[2] यदि लक्ष्म ।

इतरदितरगदितमपि[3] यदि च तुर्यं चरणयुगलकमविकृतमप-रमिति कलिका सा ॥ ३ ॥

तुर्यशब्देन श्लोकचतुर्थांशः पाद उच्यते । ततश्च प्रथमं तुर्यं प्रथम-श्चरण इतरचरणसमुत्थं स्थानमितरद्वितीयचरणगतं लक्ष्म लक्षणं श्रयति, इतरदपि द्वितीयमपीतरगदितं प्रथमगदितं श्रयति च यद्यपरं चरणद्वयकं तृतीयचतुर्थरूपमविकृतं यथा स्थितमित्येवंविधा स आपीड एव सा प्रसिद्धा कलिका । यद्वा स आपीडः प्रथमं प्रथम-स्थाने प्रथमपादे द्वितीयपादलक्षणं श्रयति सा कलिका द्वादशाक्षरा-ष्टाक्षरषोडशाक्षरविंशत्यक्षरपादैः क्रमेण घटितेति फलितार्थः । पैङ्गले त्वेतस्या मञ्जरी नाम ।

द्विगुरुयुतसकलचरणान्ता मुखचरणगतमनुभवति च तृतीयम्[4] ।

चरण[5]मिह हि लक्ष्म प्रकृतम[6]खिलमपि यदिदमनुभवति ल-वली सा ॥ ४ ॥

तृतीयश्चरणो मुखचरणगतं प्रथमचरणस्थं लक्षणमनुभवत्यवल-म्बते । अपरं पादत्रयं प्रकृतमखिलं लक्ष्म आपीडलक्षणं च यदि तदा लवली नाम । क्रमेण द्वादशाक्षरषोडशाक्षराष्टाक्षरविंशत्यक्षरपादाव-लीत्यर्थः । गुरुद्वययुक्तचतुष्टयान्तेति वृत्तपूरणार्थं सामान्यलक्षणमेवा-नूदितम् ॥

---

१ 'अपर' इति पाठः. २ 'जगति' इति पाठः. ३ 'जनितमपि भवति शेषम्' इति पाठः. ४ 'रचितमनुभवति तृतीयः' इति पाठः. ५ 'अपर', 'चरण' इति पाठौ. ६ 'अपरमखिलमपि यदि भवति' इति पाठः.

**प्रथममधिवसति यदि तुर्यं चरमचरणपदमवसितगुरुयुग्मम् ।**
**[1]अखिलमपरमुपरिगतमिति ललितपदयुक्ता तदियममृतधारा ॥५॥**

प्रथमतुर्यं प्रथमश्चरणश्चरमचरणपदं चतुर्थचरणस्थानं प्राप्नोति । चतुर्थो भवतीत्यर्थः । अपरनिखिलं ,प्रथमचरणत्रयमापीडप्रथमपादोपरिगतद्वितीयादिपादसमं तदिदं छन्दोऽमृतधारा नाम । अवसितौ गुरुद्वययुक्तमिति इदमित्यस्य विशेषणं तुर्यवत्स्वरूपकीर्तनार्थम् । ललितपदयुक्तेति वृत्तपूरणाय स्वरूपोक्तिः । द्वादशषोडशाष्टविंशत्यष्टाक्षरपादक्रमेण भवतीति संकलितार्थः । यद्यपि वृत्तिकारेण प्रथमस्य तृतीयत्वे तृतीयस्य प्रथमत्वे लवली, प्रथमस्य चतुर्थत्वे चतुर्थस्य च प्रथमत्वेऽमृतधारेति षोडशद्वादशाष्टविंशत्यक्षरपादक्रमेण विंशतिद्वादशषोडशाष्टाक्षरपादक्रमेण च त्रयोदशैकोनविंशतिभेदयोरेते संज्ञे इति मञ्जर्यभावेऽपि तयोर्विशेष उक्तः, उदाहरणे च तथैव कृते, तथापि प्रथमस्य विपर्यासे मञ्जरीलवल्यमृतधारा इति सूत्रस्य साधारणत्वात्प्रथमपादमात्रविपर्यासोक्तेरितरेषां क्रमोऽभ्यनुज्ञाया वा सूत्रस्य मूलकारोक्त एवार्थस्तात्पर्यादेवमुक्तम् । आपीडवत्पदचतुरूर्ध्वेऽपि पादव्यत्यासे मञ्जर्याद्या भेदा ज्ञेयाः । तथा आदावेव सकलपादेषु गुरुद्वययुतं चतुरूर्ध्वं प्रत्यापीडः । यथा वृत्तौ—'चित्तं मम रमयति, कान्तं वनमिदमुपगिरिनिदि । कूजन्मधुकरकलरवकृतजनधृति, पुंस्कोकिलमुखरितसुरभिकुसुमचिततरुतति ॥' आदावन्ते च गुरुद्वयसहितं तदेवोभयापीडः पैङ्गले त्वयमपि प्रत्यापीड एव । यथा तत्रैव—'कान्तावदनसरोजं, हृद्यं घनसुरभिमधुरसाढ्यम् । पातुं रहसि सततमभिलषति मनो मे, किंचिन्मुकुलितनयनमविरतमणितरमणीयम् ॥' अनयोः पूर्वोक्तविधया चतुर्विंशतित्वमूह्यम् । उदाहरणानि विस्तरभयान्नोदाहृतानि स्वयमूह्यानि ॥

इति श्रीनारायणभट्टविरचितायां वृत्तरत्नाकरटीकायां पादचतुरूर्ध्वप्रकरणम् ॥

विषमवृत्तान्तराण्याह—

**सजमादिमे सलघुकौ च, नसजं[2]गुरुकैरथोद्गता ।**
**[3]त्र्यङ्घ्रिगतभनजला गयुताः सजसा जगौ चरणमेकतः पठेत् ॥६॥**

---

१ 'निखिलमपरमुपरितनसममिह ललितपादत्रितयममृतधारा' इति पाठः. २ 'गुरुकेषु' इति पाठः. ३ 'अङ्घ्रि' इति पाठः.

पाद इति शेषः । आदिमे पादे सजसलघवः, अथानन्तरम् । द्वितीयपादे इत्यर्थः । नसजगुरुषु सत्सु तृतीयेऽङ्घ्रौ भनजलघवस्ते गयुता गुरुयुक्ताः । कार्या इत्यर्थः । परिशेषे चतुर्थे सजसा गणा जगुरू च चरणमेकवचननिर्देशात्प्रथममेकं चरणमेकत एकीकृत्य द्वितीयेनेत्यर्थात्पठेत् । प्रथमद्वितीयौ पादौ विलम्बेन पठेत् । अत्यन्तयतिं न कुर्यादित्यर्थः । सजमिति द्वन्द्वैकवद्भावः । स्वार्थे कः । त्रयाणां पूरणेऽङ्घ्रौ गता ये भनजला गयुक्ताः कार्या इति । मध्यमपूरणपदलोपिसमाश्रयणेन उद्देशविधानाद्वा सर्वविधानाच्च तीयप्रत्ययोत्पत्तिरसामर्थ्ये च न भवत इति ज्ञेयम् । एकत इति एकशब्दो भावप्रधानस्तृतीयार्थे च तसिः । तथा चैक्येनेत्यर्थः । ल्यब्लोपे पञ्चमी । प्रथमं द्वितीयेनैकं विधाय पठेदित्यर्थः ॥

चरणत्रयं व्रजति[1] लक्ष्म, यदि सकलमुद्गतागतम् ।

नौ भगौ भवति सौरभकं, चरणे यदीह भवतस्तृतीयके[2] ॥ ७ ॥

स्वार्थे कः । तृतीये चरणे नौ रगणनगणौ भगुरू च भवतः । चरणत्रयपरिशेषात्प्रथमद्वितीयचतुर्थरूपं उद्गतास्थितं समग्रलक्षणं भजति, तदेह शास्त्रे सौरभकं भवतीति व्यवसितिश्च । तदाध्याहाराभ्यामर्थः ॥

नयुगं सकारयुगलं च, भवति[3] चरणे तृतीयके ।

तदुदितमुरुमतिभिर्ललितं, यदि शेषमस्य खलु पूर्वतुल्यकम् ॥ ८ ॥

तृतीयपादे ननससाः, शेषं तृतीयान्यचरणत्रयं पूर्वोक्तोद्गतावत्तदा बहुदर्शिभिर्ललितं नामोक्तम् । मतेर्विषयबाहुल्येनोरुता न तु स्वतः । अन्यथा स्थूलबुद्धित्वोक्त्या निन्दैव स्यात् । स्वार्थे कः । तथोद्गतायाः प्रथमतृतीयपादव्यत्यये मन्थरा नाम । उदाहरणमूह्यमेव ॥

इति वृत्तरत्नाकरटीकायामुद्गताप्रकरणम् ॥

म्सौ ज्भौ गौ प्रथमाङ्घ्रिरेकतः पृथगन्यत्रितयं सनजरगास्ततो ननौ सः ।

त्रिनपरिकलितजयौ, प्रचुपितमिदमुदितमुपस्थितपूर्वम् ॥ ९ ॥

मसजभगगुरवः प्रथमपादः । स चैकः पृथक्पठनीयः, न तूद्गताव-

---

१ 'भजति' इति पाठः. २ 'भजति चरणं तृतीयकम्' इति पाठः. ३ 'तथा' इति पाठः.

द्वितीयेनैकीकृत्येत्यर्थः । प्रथमार्थे तसिः । अन्यच्चरणत्रयं कथ्यत इति शेषः । सनजरगुरुभिर्द्वितीयः पादस्तदनन्तरं तृतीयपादे ननौ सगणश्च त्रिभिर्नगणैः परिकलितौ सहितौ जयौ गणौ चतुर्थे पादे इदं छन्द उपस्थितपदपूर्वं प्रचुपितम् । उपस्थितप्रचुपितमित्यर्थः । अन्यस्तु प्रथमोऽङ्घ्रिरेकः केवलः पठनीयः । अन्यच्चु चरणत्रयं पृथक्कथनाद्भिन्नत्वेनैकीकृत्य पठनीयम् । न तु तत्प्रतिचरणान्तं विरामः कार्यः, ततः श्लोकार्थे तु विशेषत इत्यस्यापवादोऽयमिति व्याचख्यौ ॥

नौ पादेऽथ तृतीयके सनौ नसयुक्तौ,[1]
प्रथमाङ्घ्रिकृतयतिस्तु वर्धमानम् ।[2]
त्रितयमपरमपि पूर्वसदृशमिह भवति[3]
प्रततमतिभिरिति गदितं लघु वृत्तम् ॥ १० ॥[4]

तृतीयपादे नौ नगणौ, अथ सनौ सगणनगणौ ननगणाभ्यां युक्तौ एवं षड् गणा भवन्ति । अपरं पादत्रयं प्रथमद्वितीयचतुर्थरूपमुपस्थितप्रचुपिततुल्यमेव भवति । इत्यमुना प्रकारेण प्रसिद्धधीभिर्लघु सुन्दरं वर्धमानं नाम वृत्तमुदितमुक्तम् । प्रथमाङ्घ्रौ कृतया यत्या प्रस्तूयते प्रशस्यते प्रशस्ततया पठ्यते तत्तादृगिति वर्धमानविशेषणम् । तुगभावस्त्वागमजमनित्यमिति स्मरणात् । तु इति भिन्नपदे तु यतिरित्यन्तं पुंलिङ्गं स्त्रीलिङ्गं वानन्वितं स्यात् । 'यतीह' इति तु पाठो निर्दोषः । अयं च पूर्वोक्तानुवाद एवेति व्याख्यानं तद्वदेव ज्ञेयम् ॥

अस्मिन्नेव तृतीयके यदा तजराः स्युः,[5]
प्रथमे च विरतिरार्षभं ब्रुवन्ति ।
तच्छुद्धविराट् पुरः स्थितं,
त्रितयमपरमपि यदि पूर्वसमं स्यात् ॥ ११ ॥[6]

अस्मिन्वर्धमाने एव उपस्थितप्रचुपिते एव तृतीयपादे यदि तजरगणास्त्रयः स्युरपरं च चरणत्रयमुपस्थितप्रचुपितवत्स्यात्, तच्छुद्धविराट्पदं पुरः स्थितं पूर्ववर्तमानं यस्य तादृशमार्षभं शुद्धविराडार्षभं नाम ब्रुवन्ति वृद्धाः । संज्ञाया वृत्तेऽप्रवेशादुक्ते रीतिरियं प्रथमे पादे यतिरिति पूर्ववदेवार्थः । पैङ्गले तु शुद्धविराड्वृषभमिति संज्ञा ।

---

१ 'न सयुक्तौ च' इति पाठः. २ 'यतिप्रवर्धमानम्' इति पाठः. ३ 'इह' इति पाठः. ४ 'खलु' इति पाठः. ५ 'पादके' इति पाठः. ६ 'त्रितयमपि' इति पाठः.

केचित्तु प्रथमे पादे यतावार्षभम्, यदा तु प्रतिपादं यतिस्तदा शुद्ध-विराडादिकं तदेवेति यतिभेदाच्छन्दोद्वयमेव पृथग्वदन्ति ॥

इत्युपस्थितप्रचुपितप्रकरणम् ॥

अत्र ग्रन्थेऽनुक्तानि च्छन्दांसि सामान्यसंज्ञया गृह्णाति—

विषमाक्षरपादं वा पादैरसमं दशधर्मवत् ।
यच्छन्दो नोक्तमत्र गाथेति तत्सूरिभिः प्रोक्तम् ॥ १२ ॥

विषमान्यक्षराणि येषु तादृशाः पादा यस्य तत्, तथाक्षराणां वैषम्यं पादेषु गुरुलघुक्रमनियमसाम्याभावात्संख्यासाम्याभावाच्च वा, अथवा पादैरसमं स्वीयैः पादैः कृत्वा चतुःसंख्याकपादैरन्यवृत्तैरतुल्यं त्रिपञ्चषडादिपादमिति यावत् । न तु समसंख्याकपादरहितमित्यर्थः । षट्पदाद्यसंग्रहापत्तेः । अत एव—'शेषं गाथास्त्रिभिः षड्भिश्चरणैश्चोपलक्षिताः' इति प्रागुक्तं विषमाक्षरपादत्वं चतुरूर्ध्वादीनामप्यस्तीति तेषां गाथात्वं निवारयितुमाह—यदिति । अत्र यच्छन्दो विशेषेण नोक्तं तदित्यर्थः । इदं चावृत्त्या स्वातन्त्र्येणापि योज्यम् । तेन समाक्षरपादानां समपादानां च कुड्मलदन्त्यादीनामपि गाथात्वं सिध्यति । अत एव 'अत्रानुक्तं गाथा' इति संदिग्धाकारेण सूत्रितं पिङ्गलेन । विषमाक्षरपादस्य गाथात्वेऽष्टादशसप्तनवाक्षरमूलकारिकैवोदाहरणं पादैरसममेव । उदाहरणमाह—दशधर्मवदिति । दशधर्मशब्दयोगाल्लक्षणया भारतस्था षट्पदा गाथा दशधर्मशब्देनोच्यते । सा यथा—'दश धर्मं न जानन्ति धृतराष्ट्र निबोध तान् । मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ॥ त्वरमाणश्च भीरुश्च लुब्धः कामी च ते दश ॥' इति । असमपादानां दशाष्टादशादिपादानां नाटकादिस्थनान्द्यादीनामप्यनेन गाथात्वमुक्तं भवति । यथोक्तम्—'शब्दतो वार्थतो वापि मनाक्काव्यार्थसूचना । यत्राष्टभिर्वा दशभिरष्टादशभिरेव वा । षड्विंशत्या पदैर्वापि सा नान्दी परिकीर्तिता ॥'इति । यच्छन्दो नोक्तमित्यस्य स्वातन्त्र्येण व्याख्या । तेनोत्तमानामपि गाथात्वं भवति । तत्र कियतीनां वृत्त्यादिपर्यालोचनयोदाहरणानि सलक्षणानि कथ्यन्ते । तत्र त्रिष्टुभि—भतनगगुरुभिः कुड्मलदन्ती नाम । यथा—'कुड्मलदन्ती विकटनितम्बा किंनरकण्ठी लघुतरमध्या । बिम्बफलोष्ठी लघुतरनेत्रा मित्र भवन्तं सुखयतु कान्ता ॥' अत्र पञ्चभिः षड्भिश्च यतिः ॥ जगत्याम्—नजजरैर्वरतनुः । यथा—'अयि विजहीहि दृढोपगूहनं त्यज नवसंगमभीरु वल्लभम् । अरुणकरोद्गम एष वर्तते वरतनु संप्रवदन्ति कुक्कुटाः ॥ 'षड्भिः षड्भिश्च यतिः ॥

मभसमैर्जलधरमाला । यथा—'धत्ते शोभां कुवलयदामश्यामे शैलोत्सङ्गे जलधरमाला लीना । विद्युल्लेखा कनककृतालंकारा क्रीडासुप्ता युवतिरिवाङ्के पत्युः ॥' चतुर्भिरष्टाभिश्च यतिः ॥ नौ रौ गौरी । यथा—'प्रणमत चरणारविन्दद्वयं त्रिभुवननमितस्य गौरीपतेः । सकृदपि मनसैव यः सेवितः प्रवितरति यथेष्टमष्टौ गुणान् ॥' एतस्या एव गौर्या दण्डकात्प्रागेकैकरेफवृद्धौ नामान्तराणि भवन्ति । भतनसा ललना । यथा—'या कुचगुर्वी मृगशिशुनयना पीननितम्बा मदकरिगमना । किंनरकण्ठी सुललितदशना सा तव सौख्यं वितरतु ललना ॥' पञ्चभिः सप्तभिश्च यतिः ॥ अतिजंगत्याम्—सजसजगैः कनकप्रभा । यथा—'कनकप्रभा पृथुनितम्बशालिनी विपुलस्तनी हरिणशावकेक्षणा । इयमङ्गना नयनयोः पथि स्थिता कुरुते न कस्य मदनातुरं मनः ॥' ननततगुरुभिः कुटिलगतिः । यथा—'अधरकिसलये कान्तदन्तक्षते हरिणशिशुदृशां नृत्यति भ्रूयुगम् । ध्रुवमिदमुचितं यद्विपत्तौ सतामतिकुटिलगतैः स्यान्महानुत्सवः ॥' सप्तभिः षड्भिश्च यतिः ॥ शक्वर्याम्—भजसनैर्गुरुभ्यां च वरसुन्दरी । यथा—'स्वादुशिशिरोज्ज्वलजलैः सुपरिपूर्णं वीचिचयचञ्चलविचित्रशतपत्रम् ॥ हंसकलकूजितमनोहरतटान्तं पश्य वरसुन्दरि सरोवरमुदारम् ॥' मभनयगगैः कुटिलम् । यथा—'अध्वन्यानां जनयति सुखमुच्चैः कूजन्दात्यूहोऽयं पथि निचुलिनि तोयोपान्ते । कर्णाटस्त्रीरतिकुहरिततुल्यच्छेदैर्नादैः कण्ठस्खलनकुटिलमन्दावर्तैः ॥' वेदै रसैः समुद्रैश्च यतिः ॥ अष्टौ—भरनभभगैः शैलशिखा । यथा—'शैलशिखानिकुञ्जशयितस्य हरेः श्रवणे जीर्णतृणं करेण निदधाति कपिश्चपलः । क्षुद्रवधापवादपरिहारविनीतरुषस्तस्य न तावतैव लघुता द्विपयूथभिदः ॥' भरयननगैर्वरयुवती । कुञ्जरकुम्भपीठपीनोन्नतकुचयुगला पार्वणशर्वरीशगर्वापहमुखकमला । पीननितम्बबिम्बसंवाहनशिथिलगतिर्मुञ्ज नराधिराज भूयात्तव वरयुवतिः ॥' अत्यष्टौ—ससजभजगगैरतिशायिनी । यथा माघे—'इति धौतपुरंध्रिमत्सरान्सरसि मज्जनेन श्रियमाप्तवतोऽतिशायिनीमपमलाङ्गभासः । अवलोक्य तदैव यादवानपरवारिराशेः शिशिरेतररोचिषाप्यपां ततिषु मङ्क्षुमीशे ॥' दशभिः सप्तभिश्च यतिः ॥ नजभजजलगैरवितथम् । यथा—'श्रुतिपरिपूर्णवक्त्रमतिसुन्दरवाग्विभवं प्रमथितजैमिनीयमतसागरपारगतम् । अवितथवृत्तविप्रजनपूजितपादयुगं पितरमहं नमामि बहुरूपमुदारमतिम् ॥' एतदेवाष्टपञ्चचतुर्भिर्यतौ कोकिलकं नाम । यथा—'नवसहकारपुष्पमधुनिष्कलकण्ठतया मधुरतरस्वरेण परि-

कूजति कोकिलकः । प्रथमककारविद्धवचनैर्धनलुब्धमते तव गमनस्य भङ्गमिव संप्रति कर्तुमनाः ॥' धृतौ—रसजजभरैर्विबुधप्रिया । यथा—'कुन्दकोमलकुड्मलद्युतिदन्तपङ्क्तिविराजिता हंसगद्गदवादिनी वनिता भवेद्विबुधप्रिया । पीनतुङ्गपयोधरद्वयभारमन्थरगामिनी नेत्रकान्तिविनिर्जितश्रवणावतंससितकैरवा ॥' अष्टभिर्दशभिश्च यतिः ॥ अतिधृतौ—यमनसररगुरुभिर्विस्मिता । यथा माघे—'श्रिया जुष्टं दिव्यैः सपटहरवैरन्वितं पुष्पवर्षैर्वपुष्टश्चैद्यस्य क्षणमृषिगणैः स्तूयमानं निरीक्ष्य । प्रकाशेनाकाशे दिनकरकरान्विक्षिपद्विस्मिताक्षैर्नरेन्द्रैरौपेन्द्रं वपुरथ विशद्धाम वीक्षांबभूवे ॥' षड्भिः षड्भिः सप्तभिश्च यतिः । प्रकृतौ—नजभजजजरैर्धृतश्रीः । यथा माघे—'तुरगशताकुलस्य परितः परमेकतुरङ्गजन्मनः प्रमथितभूभृतः प्रतिपथं मथितस्य भृशं महीभृता । परिचलतो बलानुजबलस्य पुरः सततं धृतश्रियश्चिरविगतश्रियो जलनिधेश्च तदाभवदन्तरं महत् ॥' त्रिःसप्तसु यतिः । एवमादीनि वृत्तप्रस्तारमहाकविप्रयोगेषु दृश्यमानानि गाथाख्यानि ॥ यदा तु यच्छन्दो नोक्तमत्रेति विषमाक्षरपादमित्यस्य विशेषणं तदा समच्छन्दसां गाथात्वाभावादेतानि त्रिष्टुबादिष्वेव द्रष्टव्यानि । एवमन्यान्यपि छन्दांसि कविप्रयोगानुरोधाज्ज्ञेयानि, समार्धसमविषमप्रस्तारेषु तेषामुपलम्भात् । विशेषसंज्ञाभावात्तु नोदाहृतानि । एतज्जातिवृत्तात्मना द्विविधमपि च्छन्दो न केवलं संस्कृतविषये किंतु प्राकृतदेशभाषास्वपि कवीच्छया भवति । तत्रार्यैव प्राकृतादिषु गाथेति संज्ञा । ममैव—'सअलसिणेहुमिअङ्को तुइ गुणरअणाअरे उदिदो । मीलुप्पलप्पबोहे सिढिलो मा भोदु पच्छणा एसा ॥ [सकलस्नेहमृगाङ्कस्त्वयि गुणरमणाम्बरे उदितः । मिलितापरप्रबोधे शिथिला मा भवतु प्रार्थनैषा ॥]' वैतालीये च शकुन्तलायां यथा—'सहजे किल जे विणिन्दिए णहु दे कम्म विवज्जणीअके । पसुमालणकम्मदालुणे अणुकम्पाभिदुले अ सोत्तिए ॥ [सहजं किल यद्विनिन्दितं न खलु तत्कर्म विवर्जनीयम् । पशुमारणकर्मदारुणे अनुकम्पाभिदुरे च श्रोत्रिये ॥]' एवं समादिष्वपि कर्पूरमञ्जर्यामुदाहरणानि ज्ञेयानि । भाषायामपि । तत्र महाराष्ट्रभाषायामुपजातौ यथा—'अगा मुरारी भवदुःख भारी कामादिवैरी मन हें थरारी । मी मूढ देवा न करींच सेवा माझा कुठावा परि तां करावा ॥' गुर्जरभाषया स्रग्विणी यथा—'वित्ततें संचवूं युक्ततें भोगवूं अग्नितें होमवूं विप्रतें आपवूं । पापतें खंडवूं कामतें दंडवूं पुण्यतें संचवूं रामतें सेववूं ॥' कान्यकुब्जभाषयां वसन्ततिलका यथा—'कन्दर्परूपजवने तुलली न कृष्णसेकोप-

काम हमही बहुपीर छोडी । तो भेटिके विरहपीरन साउ मारी यें भांति दूति पठई कठिलातगोपी ॥' म्लेच्छसंस्कृतयोः संकरे मालिन्या तथा कस्यचित्—'हरनयनसमुत्थज्वालवह्नि जलाया रतिनयनजलौघैः खाक बाकी बहाया । तदपि दहति चेतो मामकं क्या करोंगी मदन-शिरसि भूयः क्या बला आगि लागी ॥' एवं गौडादिभाषासु तत्तत्सं-करे चोदाहरणानि ज्ञेयानि । अथ शेषं गाथा इति सामान्यत उपक्षि-प्तानि विस्तरभीतेर्विशेषतो नोक्तानि प्राकृतादिषु प्रायः परिदृष्टानि छ-न्दांसि प्राकृतपिङ्गलशंभुच्छन्दश्चूडामण्यादिग्रन्थपर्यालोचनया व्यु-त्पित्सुव्युत्पत्त्यर्थमस्माभिरुच्यन्ते । तत्र मात्राच्छन्दःसूपयुक्ता गणभे-दाः । तत्र द्विकलौ द्वौ यथा—ऽ, ॥. त्रिकलास्त्रयः—ऽ।, ।ऽ, ।।।. च-तुःकलाः पञ्चार्यादिषु संस्थिता इत्यत्र पञ्च मूल एव पूर्वमुक्ताः । पञ्च-कला अष्टौ—ऽऽ।, ऽ।ऽ, ।ऽऽ, ऽ।।।, ।ऽ।।, ।।ऽ।, ।।।ऽ, ।।।।।. षट्कला-स्त्रयोदश यथा—ऽऽऽ, ऽऽ।।, ऽ।ऽ।, ऽ।।ऽ, ।ऽ।ऽ, ।ऽऽ, ।ऽऽ।, ।।ऽऽ, ऽ।।।।, ।ऽ।।।, ।।ऽ।।, ।।।ऽ।, ।।।।ऽ, ।।।।।।. एतेषां व्यवहारार्थं सं-ज्ञास्तास्तैः कृतास्ता अत्यन्तोपयोगाभावाद्विककलादिशब्दैरेव व्यव-हारसिद्धेर्ग्रन्थविस्तरभयान्नोच्यन्ते । गौरवात्षट्कलस्य हरि-शशि-सू-र्य-शक्र-शेष-अहि-कमल-ब्रह्म-कलि-चन्द्र-ध्रुव-धर्म-शालि-करसंज्ञाः ॥

अथ गाथाप्रकरणम् । तत्र चतुःपञ्चाशद्भिर्मात्राभिर्गाथः, सप्तपञ्चा-शद्भिर्गाथा, विपरीतार्धघटिताभिस्ताभिरेव विगाथः, षष्टिमात्र उ-द्गाथः, द्विषष्टिमात्रा गाहिनी, सैव विपरीतार्धा सिंहिनी द्विषष्टिमात्रा-चतुःषष्टिमात्राभिः स्कन्दकमिति सप्त भेदाः । तत्र यदार्धद्वयेऽपि सप्त सार्धाश्चतुर्मात्रिका गणाः षष्ठगणास्त्वेककलचतुर्थरूपस्तदा गाहः । अत्र उदाहरणम्—'चन्दो चन्दणहारो तावअ रूअं पआसन्ति । चण्डे सरस्स कीती जावअ अप्पं न दंसेइ ॥ [चन्द्रश्चन्दनहारस्तावद्रूपं प्रकाशयतः । चण्डेश्वरस्य कीर्तिर्यावदात्मानं न दर्शयति ॥]' सं-स्कृते त्वियमुपगीतिः । आर्येव प्राकृते गाथा उदाहरणं ममैव प्रा-गुक्तम् । तदुक्तम्—'पढमं बारह मत्ता बीरा अठ्ठराहइ संजुत्ता । जह पढमं तह तीअं दहपञ्चविहूसिआ गाहा ॥ [प्रथमं द्वादश मात्रा विरा-मोऽष्टादशभिः संयुक्ता । यथा प्रथमं तथा तृतीयं दशपञ्चविभूषिता गाथा ॥]' इति । तत्र यदि सप्तविंशतिर्गुरवस्त्रयश्च लघव इत्येवं त्रिंश-दक्षरा तदा लक्ष्मीनाम्नी । षड्विंशतिर्गुरवः पञ्च लघवस्तदा ऋद्धिः । एवमेकगुरुपञ्चाशल्लघुपर्यन्तमेकैकगुरुह्रासे लघुद्वयद्वयवृद्धौ च त्रिंश-दक्षरकं भेदमारभ्य षट्पञ्चाशदक्षरभेदपर्यन्तं सप्तविंशतिर्भेदाः ।

क्रमेण तन्नामानि—लक्ष्मी-ऋद्धि-बुद्धि-लज्जा-विद्या-क्षमा-गौरी-देही-रात्रि-पूर्णा-च्छाया-कान्ति-महामाया-कीर्ति-सिद्धा-मानी-रामा-गाहिनी-विश्वा वासिता-शोभा-हरिणी-चक्री-सारसी-कुररी-सिंही-हंसी (२७) इति । त्रयोदशलघुपर्यन्तं विप्रा, तत एकविंशतिलघ्ववधि क्षत्रिया, ततः सप्तविंशत्यवधि लघुभिर्वैश्या, ततः सर्वा शूद्रेति गाथाजातिः । गाथान्तर्गतेनैकेन जगणेन कुलीना गाथा भवति, द्वाभ्यां कुलटा, बहुभिर्वेश्या, जगणरहिता रण्डा । तत्रापि या प्रथमादिविषमादिस्थाने जगणयुक्ता सा गुर्विणीति संज्ञिता कर्तुर्नायकस्य च दुष्टा भवति । सर्वासां गाथानां प्रथमपादो हंसीवन्मन्थरः पठनीयः, द्वितीयः सिंहविक्रमवदुद्धतः, तृतीयो गजगतिवल्ललितः, चतुर्थः सर्पगतिवच्चञ्चल इति । गाथाद्वितीयार्धे यदि प्रथमं प्रथमं च द्वितीयं तदा विगाथः । इयं संस्कृते उद्गीतिः । यथा—'परिहर माणिणि माणं पेक्खहि कुसुमाइं णीवस्स । तुम्ह कए खरहिअओ गेण्हइ गुलिआ धणुइ किर कामो ॥ [परिहर मानिनि मानं प्रेक्षस्व कुसुमानि नीपस्य । तव कृते खरहृदयो गृह्णाति गुलिका धनुषि किल कामः ॥]' तथा द्वयोरप्यर्धयोस्त्रिशन्मात्रा गाथा प्रथमार्धवद्यदि भवति तदोद्गाथः । यथा—'सोऊण जस्स णामं अंसूणअणाइं सुमहि रुद्धन्ती । भण वीर चेइवइ णो पेच्छामि मुहं कहं जदिच्छं से ॥ [श्रुत्वा यस्य नामाश्रुनयने संमुखं रुणद्धि । भण वीर चेदिपते नो प्रेक्ष्ये मुखं कथं यथेच्छं तस्य ॥]' इयमेव संस्कृते गीतिः । तथा पूर्वार्धे त्रिंशन्मात्रा गाथावत् उत्तरार्धे एकगुर्वाधिक्येन द्वात्रिंशत् तदा गाहिनी । अर्धवैपरीत्ये च सिंहिनी । क्रमेणोदाहरणे—'मुञ्चहि सुन्दरि पाअं अप्पहि हसिऊण सुमुहि वाहं मे । कप्पिअ मेच्छसरीरं पेच्छिइ वअणाइ तुम्म धुअहं वीरो ॥ [मुञ्च सुन्दरि पापमर्पय हसित्वा सुमुखि बाहुं मे । कल्पयित्वा म्लेच्छशरीरं प्रेक्षिष्ये वदनं तव ध्रुवमहं वीरः ॥]' 'वरिसइ कणअह विट्ठि तप्पइ भुअणे दिआणिसं जागन्तो । णीसङ्कं साहसङ्को णिन्दइ इन्दं अ सूरबिम्बं अ ॥ [वर्षति कनकस्य वृष्टिं तपति भुवने दिवानिशं जाग्रत् । निःशङ्कं साहसाङ्को निन्दति इन्द्रं च सूर्यबिम्बं च ॥]' एते संस्कृते ललितावल्गुगीतिसंज्ञे । तथार्धद्वयेऽपि चतुर्मात्रिकाष्टगणघटितं स्कन्धकं सेतुकाव्ये यथा—'जं जं आणेइ गिरिं रइरअचक्कपडिघट्टणसहं हणुमा । तं तं लीलाइ णलो वामकरत्तोल्लिअं रएइ समुद्दे ॥ [यं यमानयति गिरिं रविरथचक्रपरिघट्टनसहं हनुमान् । तं तं लीलया नलो वामकरोत्तोलितं रचयति समुद्रे ॥]' इदमेव संस्कृते आर्यागीतिः । अत्र यद्यष्टाविंशतिर्गुरवः, अष्टौ लघवस्तदा न-

न्दसंज्ञा । तत एकगुरुद्विषष्टिलघुपर्यन्तमेकैकगुरुह्रासे लघुद्वयद्वयवृद्धौ चाष्टविंशतिर्भेदाः । तेषां क्रमेण संज्ञाः—नन्द-भद्र-शेष-सारङ्ग-शिव-ब्रह्म-चारण-वरुण-नील-मदन-तालङ्क-शेखर-शर-गगन-शरभ-विमति-क्षीर-नगर-नर-स्निग्ध-स्नेहन-मदकल-लोभ-शुद्ध-सरित्-कुम्भ-कलश-शशधराख्याः । तत्र नन्दोदाहरणम्—'चन्दा कुन्दा कासा हारा हंसा तिलोअणा केलासा । जेता जेता सेता तेता कासीस जिणिआ तेरिसि किती ॥ [चन्द्रः कुन्दः काशो हारो हंसास्त्रिलोचनः कैलासः । यावद्यावच्छ्वेतं तावत्काशीश जितं ते कीर्त्या ॥]' एवमन्येष्वपि भेदेषु ज्ञेयम् । इति गाथाप्रकरणम् ॥

अथ दोहा । यस्याः प्रथमतृतीययोः पादयोः प्रथमं षट्कलो गणः, ततश्चतुष्कलः, ततस्त्रिकल इत्येवं त्रयोदश मात्राः, द्वितीयचतुर्थयोः षट्कलचतुष्कलौ समानौ त्रिकलस्थाने एको लघुरित्येकादशमात्रास्तदिदमष्टाचत्वारिंशन्मात्राभिर्दोहाच्छन्दः । यथा—'सुरुतरु सुरही परसमणि णहि वीरेससमाण । ओपुण वक्कलकटिणतणुओ पसुओ पाखाण ॥ [सुरतरुः सुरभिः स्पर्शमणिर्नहि वीरेशसमानः । एते वल्कले कठिनतनुः पशुः पाषाणः ॥]' अत्र द्वाविंशतिर्गुरवश्चत्वारो लघवो यत्र तद्भ्रमरम् । तत एकगुरुपर्यन्तमेकैकगुरुह्रासे लघुद्वयद्वयवृद्धौ त्रयोविंशतिर्नामानि । यथा—भ्रमर-भ्रामर-शरभ-श्येन-मण्डूक-मर्कट-करभ-नर-मराल-मधुकल-पयोधर-चल-वानर-त्रिकल-कच्छप-मत्स्य-शार्दूल-अहिवर-व्याघ्र-विडाल-श्व-उन्दुर-सर्पेति । सर्वे अष्टाचत्वारिंशल्लघव एव । तत्र भ्रमरोदाहरणम्—'जा अद्धङ्गे पव्वई सीसे गङ्गा वासु । जो देआणं वल्लहो वन्दे पाअं तासु ॥ [यस्यार्धाङ्गे पार्वती शीर्षे गङ्गा वसति । यो देवानां वल्लभो वन्दे पादं तस्य ॥]' तत्रापि द्वादशावधिलघुका विप्रा । ततो द्वाविंशत्यवधिका क्षत्रिया । द्वात्रिंशदवधिलघुका वैश्या । इतरा शूद्रेति । तत्र यस्याः प्रतिपादं प्रथमे तृतीये च चरणे जगणः सा दुष्टा दोहेति । इति दोहाप्रकरणम् ॥

अथोत्कच्छा । प्रथमं चतुष्कलौ द्वौ गणौ, ततस्त्रिकल एकः, एवमेकादशमात्रारचितपादषट्कयुक्तोत्कच्छा । तत्रापि सर्वैर्लघुभिर्लोहाङ्गिनी नाम ततश्चतुश्चतुर्गुरुवृद्धौ अष्टाष्टलघुह्रासे दशपर्यन्तं हंस्यादीनि । लौहाङ्गिनी लघवः ६६, हंसी गुरु ४ लघवः ५८, रेखा गुरु ८ लघवः ५०, तालङ्की गुरु १२ लघवः ४२ कम्पी गुरु १६ लघवः ३४, गम्भीरा गुरु २० लघवः २६, काली गुरु २४ लघवः १८, कालरुद्राणी गुरु २८

लघवः १०, एवमष्टौ भेदाः । तत्र लौहाङ्गिनी यथा—'विमुहचलिअ रण अचलु परिहरिअ हअगअवलु । हलहलिअ मलअणिवइ जसु जस तिहुअण पिवइ । वरणसिणरवइ लुलिअ सउलु उपरि जस फुलिअ ॥ [विमुखचलितो रणेऽचलः परिहृत्य हयगजघटाः । हलहलायमानो मलयनृपतिर्यस्य यशस्त्रिभुवनं पिबति । वाराणसीनरपतेर्लुलितं सकलमुपरि यशः स्फुटितम् ॥]' एवं सर्वेषूह्यम् । इत्युत्कच्छा ॥

अथ रोला । यथेच्छं गुरुलघुभिश्चतुर्विंशतिमात्राः प्रतिचरणं भवन्ति, एवं पादचतुष्टययुता रोला । यथा—'पअभरदरमह धरणी तरणि धजधुलिहि रुम्पिअ । कमठपीठ ढरपडिअ मेरुमन्दरगिरि कम्पिअ । कोहे चलिअ हम्मीरवीर गअजूहजुत्तो । कट्ठे किअउ हाकन्द मुच्छि मेच्छके पुत्तो ॥ [पदभरदर्मरिता धरणी तरणिर्ध्वजधूलिभिर्लुप्तः । कमठपीठं धडपडितं मेरुमन्दरशिरः कम्पितम् । क्रोधेन चलितो हम्मीरवीरो गजयूथयुक्तः । कष्टेन कृत आक्रन्दो मूर्च्छितो म्लेच्छपुत्रः ॥]' अत्र एकादश गुरवो द्वौ लघू यदि पादे तदा रोला शुद्धा । प्रतिपादमेकगुरुह्रासे लघुद्वयवृद्धौ च करतालादिसंज्ञा भेदा द्वादश । यथा—कुन्द-करताल-मेघ-तालङ्क-काल-रुद्र-कोकिल-कमल-इन्द्र-शंभु-चामर-गणेश्वरेति । इति रोला ॥

अथ गन्धा । प्रथमपादे सप्तदशवर्णाः, द्वितीयेऽष्टादश । मात्रासु न नियमः । द्वितीयार्धमपि तादृगेव सा गन्धा । 'कस्स चलन्ते कुम्म चलइ पुहविअ सरण । कुम्म चलन्ते महि चलइ भुअणभअकरणा । महि चलन्ते महिहरअ तह अ सुरगणा । चक्कवइ चलन्ते चलइ चक्कं जइ तिहुअण ॥ [कस्य चलने कूर्मश्चलति पृथिव्यां शरणम् । कूर्मे चलति मही चलति भुवनभयकरणा । मह्यां चलन्त्यां महीधरास्तथा च सुरगणाः । चक्रवर्तिचलने चलति चक्रं तथा त्रिभुवनम् ॥]' इति गन्धा ॥

अथ चतुष्पदा । चतुर्मात्राः सप्तगणा गुरुश्चेति त्रिंशन्मात्र एकः पादः, तादृशा एवान्ये त्रयः, एवं विंशत्यधिकशतं मात्रा भवन्ति । एवं चतुर्भिः पादैरेकः पादस्तादृशैश्चतुर्भिः पादैश्चतुःशतान्यशीत्यधिकानि मात्रा एतावता चतुष्पदा भवति । तत्र लाघवाय एकपादोदाहरणम्—'जसु सीसहि गङ्गा गोरी अधङ्गा गिम पिन्धिअ फणिहारा । कण्ठे ट्ठिअ वीसा पिन्धन दीसा संतारिअ संसारा । किरणावलिकन्दा बन्दिअ चन्दा णअणहि अणल फुरन्ता । सो मङ्गल दिज्जउ बहुसुख किज्जउ तुज्झ भवाणीकन्ता ॥ [यस्य शीर्षे गङ्गा गौरी अर्धाङ्गे ग्रीवायां पिनद्धः फणिहारः । कण्ठे स्थितं विषं परिधानं दिशः संतारयन्ति

संसारात्। किरणावलिकन्दो वलश्चन्द्रो नयनेऽनलः स्फुरति । स मङ्गलं ददातु बहु सुखं करोतु तव भवानीकान्तः ॥]' एतस्यानन्ता एव भेदाः । इति चतुष्पदा ॥

अथ घाता । चतुर्मात्रैः सप्तभिर्गणैस्त्रिभिर्लघुभिश्चैकः पादः । तत्र प्रथमं दशमात्रासु विरतिः, ततोऽष्टसु, ततस्त्रयोदशसु, एवंप्रकारकपादचतुष्टयेन घाता नाम । यथा—'रणु दक्ख दक्ख हणु जिणु कुसुमधणु अन्धअगन्धवि णासकरु । सो रक्खउ संकरु असुरभयंकरु गोरिनारि अद्धङ्गधरु ॥ [रणे दक्षो दक्षो हतो जितः कुसुमधनुरन्धकगन्धमपि नाशं चकार । स रक्षतु शंकरः असुरभयंकरो गौरीनार्यर्धाङ्गधरः ॥]' इति घाता ॥

अथ घातोनन्दः । षट्कल आदौ, ततश्चतुष्कलास्त्रयः, ततः पञ्चकलः, ततः षट्कलः, ततो लघुद्वयम् । एवंप्रकारकपदचतुष्टयेन द्विषष्टिमात्रका घातोनन्दः । एकादशसु (सप्तसु) त्रयोदशसु च यतिः । यथा—'जे वन्दिअ सिर गङ्ग हणिअ अणङ्ग अद्धङ्गे परिकर धरुणु । सो जोइजनमित्त हरेउ दुरित्त सङ्काहरु संकरचरणु ॥ [येन बद्धा शिरसि गङ्गा हतोऽनङ्गोऽर्धाङ्गे परिकरं धरति । स योगिजनमित्रं हरतु दुरितं शङ्काहरः शंकरचरणः ॥]'

अथ षट्पदप्रकरणम् । काव्यनाम्नश्छन्दसः पादचतुष्टयेनोल्लालनाम्नः पादद्वयेन षट्पदं भवति । प्रथमं द्वे मात्रे, ततः पञ्च चतुर्मात्रा गणाः, ततो द्वे मात्रे, इति चतुर्विंशतिमात्राभिः काव्यपदचतुष्टयम् । तत्रैकादशसु त्रयोदशसु च यतिः, उल्लालस्याद्ये पादे अष्टाविंशतिर्मात्राः, पञ्चदशसु त्रयोदशसु च यतिः । एवं पदद्वयम् । एतादृक् षट्पदम् । यथा—'पिन्धउ दिढसंनाह वाहउप्पर पक्खर दइ । वन्धुसमदि रण धसउ सामिहम्मीर वअण लइ । उड्डुल णभपह भमउ खग्गा रिउसीस झालउ । पक्खर पक्खर ठेल्लिवेल्लि पव्वउ अप्फालउ । हम्मीरकज्जे जजल्ल भण कोहाणल मह्नुमह जलउ । सुरताणसीस करवाल दइ तेज्जि कलेवर दिउ चलउ ॥ [परिधाय दृढसंनाहं वाहोपरि पक्षरं दत्त्वा । बन्धूनां संमत्या रणं धर्षयामि स्वामिहम्मीरवचनं गृहीत्वा । उड्डयामि नभःपन्थानं भ्रमामि खड्गं रिपुशिरसि झाटयामि । पक्षरे पक्षरे पातयित्वा पर्वतमुत्फालयामि । हम्मीरकार्ये जज्जल्लो भणति क्रोधानलो मुखमध्ये ज्वलति । सुलतानशिरसि करवालं दत्त्वा त्यक्त्वा कलेवरं दिवं चलति ॥]' प्रकारान्तरमपि षट्पदे भवति । आदौ षट्कलो गणः, ततश्चत्वारश्चतुःकलाः, ततोऽन्ते द्विकलः, एवंविधचतुर्भिश्चरणैः षण्णव-

तिमात्रा भवन्ति । तत उल्लालपदद्वयं पूर्ववदेव । उभयथापि द्विपञ्चाशदधिकं शतं मात्राणां षट्पदे भवति । अत्रोदाहरणम्—'जहा सरअससिबिम्ब जहा हरहारहंसा ठिअ । जहा फुल्लसिअकमल जहा सिरिखण्डखण्ड दिअ । जहा गङ्गकल्लोल जहा ए सोधिअ रुप्पइ । जहा दुद्धवरसुद्धफेण फम्फाइत लुप्पइ । पिअपाअपसाअदिट्ठिपलु णिहुअ हसइ जहा तरुणिजण । वरमन्ति चण्डेसर तह तुअ किति देक्खु हरिबम्भ भणा ॥ [यथा शारदशशिबिम्बं यथा हरहारहंसाः स्थिताः । यथा फुल्लसितकमलं यथा श्रीखण्डखण्डो दृश्यते । यथा गङ्गाकल्लोलो यथा रमणीयं रूप्यम् । यथा दुग्धवरशुद्धफेणं स्फुरितं लुप्यते । प्रियपातप्रसादद्दृष्टिपतितो निभृतं हसति यथा तरुणीजनः । वरमन्त्रिन् चण्डेश्वर तत्र तव कीर्तिर्दृश्यते हरिब्रह्मा भणति ॥]' काव्यस्वरूपं त्वादावन्ते च षट्कलो मध्ये त्रयश्चतुष्कलास्तृतीयो जो न्लौ वेति । इदं स्वतन्त्रस्य काव्यच्छन्दसः करणे । षट्पदे तूक्ता विधा ज्ञेयाः । काव्यस्य भेदाः पञ्चचत्वारिंशत् । तत्र यत्र षण्णवतिर्लघूनां न तु गुरुः स शक्रः । तत एकैकगुरुप्रक्षेपेण लघुद्वयद्वयह्रासे च शंभ्वाद्या भृङ्गान्ता भेदा भवन्ति । तथा च भृङ्गे अष्टौ लघवः प्रतिपादमेकादश लघुप्रकारेण समुदिते चतुश्चत्वारिंशच्च गुरवस्ततो न ह्रासः । यथा—शक्रशंभु-शूर-गण्ड-स्कन्ध-विजय-दर्प-ताराङ्क-समर-सिंह-शीर्ष-उत्तेज-फणिरक्षः-प्रतिधर्म-मराल-मृगेन्द्र-दण्ड-मर्कट-अनुबन्ध-वासण्ठ-कठ-मयूरबध-भ्रमर-भिन्न-महाराष्ट्र-बलभद्र-राज-वलित-मयूख-मन्थान-बलिमोहसहस्राक्ष-वाल-दर्पित-सरभ-दम्भ-उद्दम्भ-वलिताङ्ग-तुरग-हार-हरिणअन्ध-भृङ्गेति । तत्र शक्रस्योदाहरणम्—'जसु कर फणिवइ वलय तरुणिवर तनुमह विलसइ । नयन अनल गल गरल विमल ससहर सिर णिवसइ । सुरसरि सिरिमह वहइ सअलमणदुरितदलणकर । हसि ससहरहर हरउ दुरित तुअ दिसउ अभअवर ॥ [यस्य करे फणिपतिर्वलयस्तरुणीवरा तनुमध्ये विलसति । नयने अनलो गले गरलं विमलः शशधरः शिरसि निवसति । सुरसरिच्छिरोमध्ये वहति सकलमनोदुरितदलनकरः । हसित्वा शशधरधरो हरतु दुरितं तव दिशत्वभयवरम् ॥]' षड्गुणाः शुद्धादौ पङ्क्त्वादयो दोषा ग्रन्थान्तरादवसेयाः, विस्तरभयात्तु न प्रपञ्च्यन्ते । द्वात्रिंशल्लघ्ववधि काव्यस्य विप्रजातिः, ततश्चत्वारिंशल्लघ्ववधि क्षत्रियजातिः, ततोऽष्टाचत्वारिंशल्लघ्ववधि वैश्यः, अवशिष्टः शूद्र इति जातिभेदः । उल्लाललक्षणं तु—'त्रयश्चतुःकला आदौ त्रिकलः षट्कलस्ततः । चतुष्कलोऽथ त्रिककल उल्लाललक्षणम् ॥' तत्र सर्वगुरुः षट्पदो यथा—'जाआ जाआ अद्धङ्गे गङ्गा

सीसे लोलन्ती । सव्वासा जा पूरन्ती सव्वं दुक्खान्तं लन्ती । अग्गे आराआहारा दीसा भासा भासन्ता । वेआला जासं सङ्गे णट्टे दुट्ठा णाचन्ता गावन्ता कान्ता उच्चे ताले भूमीकम्पाणो । जा दिट्ठे मोक्खा पाईसो तुम्भाणां सुक्खं दे ॥ [जाया जाता अर्धाङ्गे गङ्गा शीर्षे लोलन्ती। सर्वाशा या पूरयन्ती सर्वं दुःखान्तं नेत्री । अग्रे ताराधारो दिशो भासा भासयन् । वेताला यस्य सङ्गे नृत्ये दुष्टं नृत्यन्ति । गायन्ति कान्ता ऊर्ध्व-तालैर्भूमिकम्पनम् । यद्दृष्टे मोक्षः प्राप्यते स युष्माकं सौख्यं ददातु ॥]'

अथ षट्पदभेदाः । तत्र काव्ये चतुश्चत्वारिंशद्गुरवः, उल्लाले च षड्विंशतिः । एवं मिलित्वा सप्ततिः गुरवो द्वादश च लघवो यत्र स यद्यशीत्यक्षरो अजयनामा प्रथमो भेदः । ततः सर्वलघुपर्यन्तमेकैकगुरुह्रासे लघुद्वयप्रक्षेपेणैकैकवर्णवृद्धौ एकसप्ततिरजयाद्या भेदा भवन्ति । यथा— अजय - विजय - वलि- वर्ण - वीर -वेताल-वृहन्नल-मर्कट-हरि-हर-ब्रह्म-इन्दु-चन्दन-शुभंकर-शाल-सिंह-शार्दूल-कूर्म-कोकिल-खर- कुञ्जर मदन-मत्स्य-सारङ्ग - शेष -सारस-पयोधर-कुन्द-कमल-कारण-शरभ-जङ्गम-शर-सुशर-समर-सारस-सरस-मेरु-सकल-मृग-सिद्ध-वुद्धि-कलकल-कमलाकर-धवल-मृतक-ध्रुव-वलय-किंनर-शक-जन-मेधाकर-ग्रीष्म-गरुड-शशिसूर्य-शल्य-नर-तुरग-मनोहर-गगन-रत्न-नव-हीर-भ्रमर-शेखर-कुसुमाकर-दीप-शङ्ख-वसु-शव्दाः ॥ तथा अजये वर्णाः ८२, गुरवः ७० लघवः १२ । अन्त्ये शव्दे लघवः १५२ । इति षट्पदप्रकरणम् ॥

प्रतिपादं चत्वारश्चतुष्कला गणास्तत्रान्तिमो जगण एव । एवं चतुर्भिः पादैश्चतुःषष्टिमात्रं पज्झटिकाच्छन्दः । यथा—'जे जे गज्जिअ-गउड वइ एउ, उण्डऊडज सभअ पराउ । उरुविक्कमविक्कमजणिअजूरु, ताकणपरक्कम कोइ ण वुज्झु ॥ [यदा यदा गर्जित्वा गरुडो वहिरेति, उद्दण्डाण्डजाः सभयाः पलायन्ते । उरुविक्रमविक्रमजनितजूस्तस्य, तत्क्षणपराक्रमं को न वुद्ध्यते ॥]' इति पज्झटिका ॥

प्रतिपादं षोडशमात्राः, अन्ते च मात्राद्वयं लघुद्वयात्मकं पादे चेज्जगणो न भवति तच्छन्दोऽलिल्लिहसंज्ञम् । यथा—'जहि आसामविदेहा-किल्लउ, सुत्थिरडाहररज्जा जिणि लिउ । कालिञ्जर जिणिह किती थप्पिअ, धण आरज्जिअ धम्मे अप्पिअ ॥ [जहि आसामविदेहकिल्लानि, सुस्थिरडाहरराज्यं जित्वा गृहाण । कालिञ्जरं जित्वा कीर्तिं स्थापय, धनमर्जयित्वा धर्मे अर्पय ॥]' इत्यलिल्लिहः ॥

अनियतगुरुलघुक्रमाः षोडशमात्राः प्रतिपादं भवन्ति, तच्चतुःषष्टिमात्रं पादाकुलकम् । पञ्चदशमात्राभिः प्रथमतृतीयपञ्चमपादाः ।

पञ्चदशमात्राः, द्वितीयो द्वादशमात्राः, चतुर्थ एकादश मात्राः, एवमष्टषष्टिमात्रा भवन्ति । एतदनन्तरं दोहाच्छन्दः समस्तमित्येवं नवपदं छन्दो रड्डा नाम । तत्र विषमपादेष्वादौ त्रिकलस्ततस्त्रयश्चतुष्कलाः, तत्रापि प्रथमेऽन्ते जगणश्चतुर्लघुर्वा, तृतीयपञ्चमयोर्भगणोऽन्ते द्वितीयपादे सर्वलघ्वन्तास्त्रयश्चतुष्कला वा, चतुर्थे द्वौ चतुष्कलौ, ततस्त्रयो लघव इति । तत उक्तलक्षणं दोहाच्छन्दः । यथा—'भमइ महुअर फुल्लअरविन्द, णवकेसुकाणणपुलिअ सव्वदेस । पिक एव सुणिय, सिअलपवण लहु वहइ, मलयकुहर णउवल्लि पेल्लिअ । चित्त मणोभउ सर हणइ, दूर दिगन्तरकन्त । के परि अप्पउ वारिहउ, ए परिमिलिअ दुरन्त ॥ [भ्रमति मधुकरः फुल्लारविन्दे, नवकिंशुककाननपूरिता सर्वदेशाः । पिक एव श्रूयते, शीतलपवनो लघु वहति, मलयकुहरे नववल्लीं क्षिप्त्वा । चित्तं मनोभूः शरैर्हन्ति, दूरदिगन्तरे कान्तः । केन प्रकारेणात्मानं धारयामि, एवं परिमीलितो दुरन्तः ॥]' एतद्भेदाः सप्त । तत्र प्रथमतृतीयपञ्चमपादेषु चतुर्दशमात्रा कलभी (१), द्वितीयतुर्थयोरेकादश सा नन्दा(२),प्रथमतृतीयपञ्चमपादेषूनविंशतिर्द्वितीयचतुर्थयोरेकादश सा मोहिनी(३),विषमपादेषु पञ्चदश समयोरेकादश सा चारुसेनी (४), विषमेषु पञ्चदश समयोर्द्वादश सा भद्रा (५), विषमेषु पञ्चदश द्वितीये द्वादश चतुर्थे एकादश स राजसेनः (६), विषमेषु षोडश समयोरेकादश द्वादश वा सा तालङ्किनी (७) इति । इति नवपदप्रकरणम् ॥

अथ पद्मावती । द्विगुरुरन्तगुरुरादिगुरुः सर्वलघुरित्येतैश्चतुर्मात्रैर्गणैः यथासंभवं गणाष्टकघटितपादचतुष्टया पद्मावती । अत्र जगणो नायकपीडादिदोषदाता अतश्चण्डाल इत्युच्यतेऽतो न शुभः । यथा—'भअभञ्जिअ वङ्गा भग्गु कलिङ्गा तेलङ्गा रण मुक्कि चले । मरहट्ठ ठिठा लग्गिअ कट्ठा सोरट्ठा भअपअपाअ पले । चम्पा रणकम्पा पव्वअ कम्पा ऊत्थाऊत्थि जीऊ हरे । कासीसर राणा किअउपआणा विज्जाहर भण मन्तिवरे ॥ [भयभग्ना वङ्गा भग्नाः कलिङ्गास्तैलङ्गा रणं मुक्त्वा चलिताः । महाराष्ट्राः स्तिमिता लग्ना कष्टाः सौराष्ट्रा भयेन पदे पदे पलायिताः । चम्पा रणकम्पा पर्वताः कम्पिता उत्थायोत्थाय जीवं हरति । काशीश्वरो राजा कृतप्रयाणो विद्याधरो भणति मन्त्रिवरः ॥]' इति पद्मावती ॥

पूर्वोक्ताया दोहाया यद्येकमधर्मपरं चार्धं पूर्वोक्तलक्षणकाव्येन युक्तं तदिदं चतुश्चत्वारिंदशधिकशतमात्राभिः श्रृङ्खलायमकानुप्रासवद्गुणालंकारवत्कुण्डलिकाख्यं छन्दः । अत्र चाविरम्य कुण्डलिकारेण पठनात्कुण्डलिकेति संज्ञा । यन्मते दोहा द्विपदा तन्मतेनेयं षट्पदा,

यन्मते दोहा चतुष्पदा तन्मते कुण्डलीकाष्टापदेति । यथा—'ढोल्ला मारिअ ढिल्लिमह मुच्छिम मेच्छसरीर । पुर जज्जल्ला मल्लवर चलिअ वीर हम्मीर । चलिअ वीर हम्मीर पाअभर मेइणि कम्पइ । दिस मगणह अन्धार धूलि सूरहरह झम्पइ । दिग मगणह अन्धार आणु खुरसाणक ओल्ला । दमलिदअसु विपक्ख मारू ढिल्लीमह ढोल्ला ॥ [ढोलं ताडयित्वा दिल्लीमध्ये मूर्च्छयित्वा म्लेच्छशरीराणि । पुरो जज्जलो मल्लवरश्चलति वीरो हम्मीरः । चलिते वीरे हम्मीरे पादभरेण मेदिनी कम्पते । दिशो मग्ना अन्धकारे धूली सूर्यरथं झम्पयति । दिशो मग्ना अन्धकारे अनन्तरं खुरसानका उत्सन्नाः । प्रमाथितो विपक्षस्ताड्यते दिल्लीमध्ये ढोलः ॥]' इति कुण्डलिका ॥

यत्र प्रतिपादे विंशत्यक्षराणि पञ्चविंशतिश्च मात्राः, तत्रापि प्रथमचातुर्मात्रिको गणः, अन्ते एको गुरुः, मध्ये यथासुखमिश्रिता गुरुलघवः स मदनान्तकः । यथा—'भञ्जिअ मलअचोलवइअ चलिअ गञ्जिअ गुज्जरा । मालउराअ मलअगिरिअ लुक्कि परिहरि कुञ्जरा । खुरसाणा खलिअ रणमहमहिअ लङ्घिअ साअरा ॥ हम्मीर ह चलिअ हारव पलिअ रिउगण काअरा ॥ [भग्ना मलयचोलपतयश्चलिता गर्जित्वा गुर्जराः । मालवराजो मलयगिरौ लुक्कायितः परिहृत्य कुञ्जरान् । खुरसानाः स्खलिताः रणपञ्चहिता लङ्घिताः सागराः । हम्मीरे च चलिते हृताः पलायिता रिपुगणाः कातराः ]' इति मदनान्तकः ॥

आद्यन्तयोः षट्कलो गणो मध्ये चतुष्कलाश्चत्वारः । एवंविधपदद्वयरचिता द्विपदी । आदौ षट्कलस्ततः पञ्च चतुष्कलास्ततो गुरुरिति वा ॥ यथा—'दाणउ देउ वेविट्ठकन्तउ गिरिवरसिहर कम्पिउ । हअगअपाअघाअ उट्ठन्तऊ धूलिहि गअण रुम्पिउ ॥' [दानवा देवा विस्मयाक्रान्ता गिरिवरशिखराणि कम्पितानि । हयगजपादघातोत्थितधूलिभिर्गगनं लुप्यते ॥ ]' इति द्विपदी ॥

नव चतुर्लघवस्ततो रगण एवं दशभिर्गणैरेकोनचत्वारिंशदक्षरैरेकचत्वारिंशन्मात्राभिरर्धं यस्याः सा खञ्जा । द्वितीयमप्यर्धं तादृक् । यथा—'महि ललइ अहि पलइ गिरि चलइ हर खलइ ससि घुमइ अमिअ वमइ भञ्ज जिविअ उट्ठए । पुणु धसइ पुणु खसइ पुणु ललइ पुणु चलइ पुणु घुमइ अमिअ वमइ विविहपरिदिट्ठए ॥ [मही ललति अहिः पलायते गिरिश्चलति हरः स्खलति शशी निद्राति अमृतं वमति भग्नो जीवित्वोत्थितः । पुनर्धर्षति पुनः स्खलति पुनर्ललति पुनश्चलति पुनर्निद्राति अमृतं वमति विविधपरिदृष्टे ॥ ]' इति खञ्जा ॥

यत्र प्रथमार्धे षट् चतुर्लघवो द्वितीयार्धे सप्त उभयोरप्यन्ते जगणो भवति सा शिखा । यथा—'फुलिअमहुभमरवहु रअणि पहु किरणवहु अवअरु वसन्त । मलयगिरि कुसुमधरि पवणवहु सहव णहु सइ भण णिज णहुहु कन्त ॥ [फुल्लितमधुभ्रमरवधू रजनिर्यत्र किरणबहुरव-तरति वसन्तः । मलयगिरिकुसुमधरपवनवहः सहे कति सखि भण निजो नास्ति कान्तः ॥]' इति शिखा ॥

आद्यार्धे नव चतुर्लघवस्ततो रगणस्ततो द्वौ गुरू इत्येवं पञ्चचत्वारिंशन्मात्राः गाथोत्तरार्धेन द्वितीयार्धे सैषा माला ॥ यथा—'वरिस जल भमइ घण मलअसिअल पवण मणहरण कणअपिजरिणिचइ विज्जुरि-फुल्लिआ णीवा । पच्छरविच्छर हिअला पिअला णहअलं ण आवेइ ॥ [वर्षति जलं भ्रमति घनो मलयशीतलः पवनो मनोहरणः कनकपि-ञ्जरनिचिता विद्युत्फुल्ला नीपाः । प्रस्तरविस्तरो हेलति खेलति नभ-स्तलं नावेद्यते ॥]' इति माला ॥

यदि दोहाच्छन्दसि प्रत्यर्धं लघुगुरुद्वयरूपाः पञ्चकला अधिका दी-यन्ते, तथा दोहाच्छन्दसो मात्राः ४८ अधिकाश्च १०, एवं अष्टपञ्चा-शन्मात्रा भवन्ति तदा चूलिका नाम च्छन्दः । यथा—'राआ लुद्धसमाज खल बहुकरिहारिणि सेवक धुत्तउ । जीवण चाहसि सुखे जइ परि-हर घरजण वहुरणजुत्तउ ॥ [राजा लुब्धसमाजः खलः बहुकलहका-रिणः सेवका धूर्ताः । जीवनं वाञ्छसि सुखे यदि परिहर गृहजनं बहु-रणयुक्तम् ॥]' इति चूलिका ॥

व्यस्तार्धा दोहैव सौराष्ट्रा । यथा—'सो माणि पुणमन्त जासु भत्त पण्डिअ तनअ । जासु घरिणि गुणमन्ति सो वि पुहवि सगाहणिलअ ॥ [स मानी पुण्यवान्यस्य भक्तः पण्डितस्तनयः । यस्य गृहिणी गुणवती सोऽपि पृथिव्यां स्वर्गनिलयः ॥]' इति सौराष्ट्रा ॥

सगणभगणचतुर्लघवो गणा गुरुश्चैको यत्र प्रतिपदं एकादशाक्षर-श्चतुर्दशमात्रकश्च स काहलिः । यथा—'उचउत्थाणअ विमलघरा तरुणी गेहिणि विणअपरा । पुण वित्तब्भपुरलमुदरा वलिसासंम-असुखहकरा ॥ [उच्चोत्थानकं विमलगृहं तरुणी गृहिणी विनयपरा । पुनर्विघ्टब्धपूर्णामुदारा वर्षासंमदसौख्यकराः ॥]' इति काहलिः ॥

यत्र जगणान्तौ चतुर्मात्रौ प्रतिपादं तन्मधुभारतम् ॥ यथा—'जसु चन्द सीस पिन्धन इ दीस । सो संभु पेउ महासुख देउ ॥ [यस्य चन्द्रः शीर्षे परिधानं च दिशः । स शंभुः पातु महासुखं ददातु ॥]' इति मधुभारतम् ॥

यत्र पादे जगणान्ता एकादशमात्राः स आभीरः । यथा—'सुन्दरि गुज्जरणारि लोअण दीहविसारि । पीणउ त्थणअभार लुलई मोतिहार ॥ [सुन्दरी गुर्जरनारी लोचनं दीर्घविसारि । पीने स्तनभारे लोलते मतिहारः ॥]' इत्याभीरः ॥

चत्वारश्चतुर्मात्रास्ततः षण्मात्रस्ततश्चतुष्कलौ गुरुश्चेति द्वात्रिंशन्मात्रा यदोद्दण्डकाहलः सर्वा अस्मिन्मात्राः १२८ । यथा—'राअह भगन्ता दिगन्तलगन्त परिहरि हअगअघररमणी, लोरहिभरुसरवर पल्लूनिअपरिकरु लोटइ पडइतनु धरणी । पुणु उट्ठइ संभरि करदत्तग्गुलिवालतणअकरकमलधरे, कासीसर राआ णेह लुकाआ कर माआ पुण थप्पि धरे ॥ [राजानो भग्ना दिगन्तरलग्नाः परिहृत्य हयगजगृहरमणीः, रुदितभरसरोवराः पतितनिजपरिकरा लोटन्ते पतिततनवो धरण्याम् । पुनरुत्तिष्ठन्ति संभृत्य करदत्ताङ्गुलिबालतनयकरकमलधराः, काशीश्वरो राजा नेह लुकायितो भव कुरु मायां पुनराक्रम्य धरिष्यति ॥]' इति दण्डकाहलः ।

आदौ गुर्वन्तश्चतुष्कलस्ततो गुर्वन्तः पञ्चकलस्तत एको लघुरित्येवं पादघटितं दीपकम् ॥ यथा—'जसु हत्थ करआल विपक्खाकुलकालसिरसे ह वरछत्त संपुण्ण स सिमन्त ॥ [यस्य हस्ते करवालो विपक्षः कुलकालः । शिरसि च वरच्छत्रं संपूर्णं स श्रीमान् ॥]' इति दीपकम् ।

यद्यादौ चतुष्कलसगणौ ततः षट्कला गुरुश्चेति षोडशमात्रापादसिंहावलोकः ॥ यथा—'हणु उज्जरगुज्जरसाउदलं दरमल्लिअवल्लि मरहट्ठवलम् ॥ वलमोलिअमालअराअकुला कण उच्च कुलच्छवि करमफुरो ॥ [जहि ऊर्जुरगुर्जरशाकदलं दलदर्पितवल्लितं महाराष्ट्रवलम् । वलमौलितमालवराजकुलं कुरु उच्चां कुलच्छविं कर्मपूरैः ॥]' इत्यलम् ॥

इति श्रीमद्भट्टरामेश्वरसूरिसूनुनारायणभट्टरचितायां वृत्तरत्नाकरव्याख्यायां पञ्चमोऽध्यायः ॥

---

## षष्ठोऽध्यायः ।

एवं समादिवृत्तत्रयमभिधायेदानीं तेषामुत्पत्तिप्रदर्शनायानुक्तानां च वृत्तानां कविप्रयोगेषु दृश्यमानानां सद्भावोपपत्तये प्रस्तारादयः षट्प्रत्यया व्याख्यातव्याः । प्रतीयते संख्यादिकमेभिस्ते प्रत्ययाः । संभावितेषु वृत्तेषु विश्वासापरपर्यायप्रत्ययख्यापकत्वाद्वा । ते च प्रस्ताराद्याः षट् । तदुक्तम्—

> प्रस्तारो नष्टमुद्दिष्टमेकद्व्यादिलगक्रिया ।
> [1]संख्यानमध्वयोगश्च षडेते प्रत्ययाः स्मृताः ॥ १ ॥

---

१. 'संख्या चैवाध्व' इति पाठः.

